

श्री[illegible]दासविरचितम्

# श्रीरघुनाथगुणोदयमहाकाव्यम्

सम्पादकः

डॉ० गंगा दत्त 'विनोदः'



श्रीरणवीरकेन्द्रीयसंस्कृत-विद्यापीठम्, जम्मू

१९७८

श्री सरस्वत्यैनमः

श्री नव्य चण्डीदास विरचितम्

# रघुनाथ गुणोदय-महाकाव्यम्

( पाठानुसन्धानपूर्वक पादटिप्पणिभिरलङ्कृतम् )

❀

सम्पादकः

डा. गंगा दत्त शर्मा विनोदः

(भू. पू. प्रोफेसर संस्कृत हिन्दी विभागाध्यक्षः

राजकीय एम.ए.एम. आर्टस कांलेज जम्बुः)

एम, ए. संस्कृते हिन्द्यांच

पी.एच.डी., वेदाचार्यः साहित्यरत्नम्, काव्यतीर्थः

प्रवक्ता --

श्री रणवीर केन्द्रीय संस्कृत विद्यापीठ, जम्बुः ।




श्रीरणवीरकेन्द्रीयसंस्कृत-विद्यापीठम् , जम्मू

१९७८

प्रकाशक:

प्राचार्य:

( श्रीरणवीरकेन्द्रीयसंस्कृतविद्यापीठम्, जम्मू
केन्द्रीय शिक्षामन्त्रालय - राष्ट्रियसंस्कृत-
संस्थानद्वारा सञ्चालितम् )



प्रथमसंस्करणम् १९७७-७८

मूल्यम्—

मुद्रक:—

इण्टरनेशनल आर्ट प्रिण्टर्ज़
बाजार पीर मिट्ठा
जम्मू । फोन नं० ५१७०



डॉ. मण्डनमिश्रः
प्राचार्यः
श्रीरणवीर-केन्द्रीय-संस्कृत-विद्यापीठ,
जम्मू ।

विदुषां पुरस्ताच्छ्रीरघुनाथगुणोदय नामकं महाकाव्यं प्रस्तुवन् स्वान्तो नितरां प्रमुमोदीमि । इदं महाकाव्यं जम्मूकश्मीराधिपति श्रीद्मन्महाराजाधिराजरणवोरसिंहवममहानुभावप्रेरणया महाकवि श्रीयुतचण्डीदासमहोदयेनतदुपास्यप्रभुगुणगणगानपरके महाकाव्यसर्व-लक्षणोपेतंश्रीरघुनाथगुणोदयनामकंमहाकाव्यं व्यरचि । तदिदंमहाकाव्यं प्रकाशयता श्रीरणवोरकेन्द्रीय संस्कृत विद्यापीठेन पारे सहस्रं वर्षेभ्यः प्रवर्तितायाः कविकेशरकुङ्कुमसवितरि जम्मूकश्मीरराज्ये संस्कृत-साहित्यगौरवाभिवृद्धिपरायाः महाकाव्यप्रणयनपरम्परायाश्चैकं सुमनो मनोहरं सुमनः श्रोवाग्देवतापादमूले अर्पितम् । विद्यापोठस्य सम्मानितप्राध्यापकेन पी० एच० डी०, एम्० ए० द्वयं, वेदाचार्यो-पाधिभाजा, श्रीमद्गङ्गादत्तशास्त्रिवर्येण तिसृभिर्हस्तलिखित मातृकाभिः समालोच्य महता श्रमेण संशोध्य पाठभेदं पाठपरिष्करणं च संयोज्य सुसमपादि । अस्मिन् महाकाव्य चषके काव्यरसपानेन सहैकोनविंशतितमशताब्दीभवानां सारस्वतराजनीति लोकनीति लोक धर्म प्रभृतीनां सम्यग् जातं प्रतिबिम्बनमलौकिकप्रतिभैः पण्डितै-र्विलोकयितुं शक्यते ।

आशासे नूनं नूत्नमपि प्रत्नरत्नभूतमिदं काव्यं सचेतसां चेतांसि समावर्जयिष्यति ।

DR. MANDANMISHRA

वै. सं. २०३४
फाल्गुणशुक्लपूर्णिमायां
भार्गवे दिने

# प्राक्कथनम्

प्रस्तुत महाकाव्यस्य रचयिता महाकवि चण्डीदासः स्वयुगे महान् संस्कृत मनीषी समभवदिति सम्प्रति समुपलब्धात्तस्य रचनाकलापात् सम्यक स्पष्टम् । किन्तु इतः पूर्वं तस्य कापि रचना प्रकाशं न समगच्छदतोऽस्य महिम्ना विरला एव परिचिता आसन् । सौभाग्येनेदानीं कवेः केचन ग्रन्थाः पाण्डुलिपिरूपेण समुपलब्धाः ये "चण्डीदास ग्रन्थावलि" इति नाम्ना सम्प्रत्येव मया प्रकाशतां नीताः । एतेषां प्रकाशितग्रन्थानां एकादश संख्यास्ति । शेषे क्रमशः प्रकाशमेष्यन्तीत्याशासे ।

संस्कृतक्षेत्रे कविः सर्वविषयक विद्वानासीदित्यपि तस्य समुपलब्धग्रंथसमुच्चय परिशीलनेनावगम्यते । संस्कृतकविता-ज्योतिष-दर्शन-स्मृति-वेद-पुराणब्रह्मसूत्रारण्यक-वेदाङ्गप्रभृतिविषयाणां परमविद्वनासीत् कविरिति कोऽपि निराकर्तुं न शक्नोति सत्यमिदम् । संस्कृतगद्यपद्ययोः महान् कविः आशुकविता-निर्माणचतुरश्चासीदिति । ज्योतिषविषये तु प्रकाण्डपण्डितत्वेनाद्यापि हरियाणाप्रान्ते स्मर्यतेऽयं कविः ।

एवञ्च कर्मकांडधुरंधरः "श्रीमद्भागवत" सप्ताहवाचने लब्धवैशिष्ट्योऽप्यासीदिति । संस्कृतभाषायामुपरि तस्य मातृभाषावदधिकार आसीदिति । परं हिन्दी, अरबी, फारसीभाषात्रितयेऽपि धुरंधर आसीत् ।

एवञ्च स्वप्रगाढ़वैदुष्यमहिम्ना स्वसमये चण्डीदास. आकाश्मीराद्दक्षिण-भारतंयावत् प्रसिद्धिमवाप । अनुमानतः त्रिंशत् ग्रथानां रचयितायं कविः भाषणे राजनीतौ, राजसभाकार्यपरिचालने च परमदक्ष आसीत् । एभिरेव गुणैस्तेन विभिन्नराजसंसत्सु प्रतिष्ठावापि ।

इदानीं समुपलब्धे तस्य रचनाकलापे "रघुनाथ- गुणोदयः" संस्कृत-

महाकाव्यं प्रधानमस्ति । अनेनैव महाकाव्येनैकशताब्द्याः पूर्वं शोषतां गतायां संस्कृतमहाकाव्यधारायां समुत्तेजितप्रवाहोऽपादि ।

इति तु महद्वैशिष्ट्यमस्यकवेर्यत्तेन भारते वैदेशिकराज्यारम्भ- मुगल-राज्यपर्यवसानयोः सन्धिकाले प्रादुर्भूय तत्रत्यसामंतवादप्रयुक्तनीतिनिर्धारण-जन्यपरिस्थितीनां प्रतिबिम्बनं स्व रचनास्वकारि । अतएवास्य युगस्य केचन प्रच्छन्नैतिहासिकपरिवेशस्य नवीना इतिवृत्तविषयाः प्रस्तुतग्रंथेभ्य उपलब्धुं शक्यते । अस्य कवेः लेखिन्यामोजः प्रसादश्च प्राचुर्येण दृश्यते । कविकल्पना हृदयानुभूतिचित्रणञ्च मार्मिकमिति वक्तुं शक्यते । स्वजीवनकाल-पर्यंतं महाकविना पर्याप्तं लिखितमासीत्, किन्तु दुर्भाग्यवशात् तदानीं मुद्रणाभाववशान्नास्य ग्रंथाः समग्रे भारते ख्यातिमवापुरुत वा प्रचारं लेभिरे । इदानीमवशिष्टं कविलिखितं रचनासमूहं पांडुलिपिरूपेण मयाऽनुसंधानकर्मणि प्रवृत्तेण कविजन्मभूमेः हरियाणा प्रदेशांतर्गत पुण्डरीकपुरा (पुण्डरी) दन्विष्य प्रकाशितं किंचिच्च प्रकाशयितुं सज्जीकृतं वर्तते । इदानीं समुपलब्धे लेख-समुच्चये एकमपूर्णं महाकाव्यमेकं पूर्णं महाकाव्यं, कानिचित् लघुकाव्यानि, कानिचित् स्त्रोत्राष्टकपुस्तकानि, दनन्दिन्यः, प्रकीर्णाः श्लोकाः, श्लोकबद्ध-प्रशस्तयः, शास्त्रार्थलेखाः व्यक्तिगत पत्राणि च सन्ति । एष रचनासम्भारः युगपदेवैकस्मात् स्थानान्मयोपलब्धः । अनेन कवेः ख्यातिः समग्रे भारते नवीन कवेरुपलब्धिरूपेण प्रसृता दृश्यते । अत्रास्ति निदानं मदीयः प्रयत्न इति निर्णेतुं विद्वांस एव प्रभवः ।

एकोनविंशति शताब्देः प्रथमचरणे समुद्भवेन कविना चण्डिदासेन स्ववयसस्तृतीयो भागः केवलमध्ययनकर्मण्येव यापितः । यत्र तेन गुरुकुल वसतिरिव महती तपश्चर्याकारि । स्वगृहादतिदूरं वाराणस्यामुषित्वा विंशति वर्षाणि यावत् वेद-वेदांग-दर्शन-व्याकरणादि विषयान् साकल्येनाधीत्य कविः स्वजन्मभूमौ पुण्डरीकपुरे प्रातिन्यवर्तत । समयोऽयं ईसवीय सन् १८३४ आसीदित्यनुमानतः स्थिरी क्रियते । इदानींमेव सर्वप्रथमं तेन पांचालदेश प्रशासकस्य म० रणजीतसिंहस्य सभायां राजकीय कवेः सम्मानितं पद-मुपलब्धम् । परन्तु कतिपय वर्षेभ्योऽनन्तरं श्री रणजीतसिंहस्य महाप्रयाणे

यदा आंग्लप्रशासकप्रयुक्ताः पंजाबयुद्धस्थितयः विषमतामगच्छन्, सम्भवतः कविरपि विहायेमं स्थानं पटियाला नगर्यां तदनन्तरं जयपुरे पश्चाच्च जम्मू-काश्मीर राजसभायां प्रतिष्ठितोऽभूदिति तस्येदानीं समुपलब्धाद्दैनन्दिनी पत्र-पुञ्जात् सम्यक् स्पष्टी भवति ।

स्वकीये युगे चण्डिदासः पंजाब, राजस्थान, वाराणसी, जम्मू-काश्मीर, हरियाणा प्रभृति प्रदेशानां संस्कृत गतिविधिषु स्वकीयं सर्वतोमुखी प्रभावं प्रस्थापयामास । संस्कृतप्रचारप्रसारलेखनादि कार्यकलापे चण्डिदासस्य मुख्यनियामकत्वमप्यासीदिति तल्लेखपर्यालोचनेन ज्ञायते । पंजाब- जम्मू-काश्मीर- राजस्थानानां राजसभासु संस्कृतस्य वरिष्ठस्थाननिष्पादने मुख्य-सूत्रधारता कविचण्डिदासमेव प्रयाति। येन राजप्रासादादारभ्य सामान्य जनकुटीरेषु सर्वत्र संस्कृत-सन्देशवाहकत्वमवधारितम् ।

## जन्मपरिचयः

कविचण्डिदासस्य जन्म हरियाणाप्रांतस्य पुण्डरीकपुर (पुण्डरी) नाम्नि ग्रामे ईसवीय सन् १८०४ तमे गौडजातीये सवालोपजाति युक्ते च ब्राह्मणकुलेऽभवत्। अस्य पितुर्नाम दुर्गादत्त "सवाल" पितामह रामनाथ इत्यासीत् । अस्य पितृव्यः ईश्वरीदत्त इत्यपि स्पष्टीकृतं कविना स्वपरिचय-दाने । यदा कवेः जन्माभवत् तदा मासः ऋतुः ग्रहस्थितिश्चैवं प्रकारिका आसीत् :—

वसन्तसमये चैत्रे मासे शुक्लपक्षे चतुर्थ्यां तिथौ कुम्भोदये सूर्ये परमो-च्चगे विक्रमस्थाने बुधस्थे, चतुर्थभावस्थे परमोच्चे चन्द्रमसि, शुक्रे द्वितीयभाव-गते, दशमभावस्थे भौमे, भाग्यस्थाने बृहस्पतौ, अष्टमे शनौ, द्वितीयस्थाने राहौ शत्रुभावे च केतौ सति बालकस्य जनिरभूदिति* कविविरचितवृत्तमुक्ता-वलि ग्रंथस्य भूमिकायां स्पष्टी भवति ।

---

*१. आसीदनन्त गुणवारिधिरप्रमेयः कीर्तिः शिवाल इति संविदिताभिधानः ।
गौडान्वये विपुलधीरतुलप्रतापः श्रीरामनाथ इति संविदिताभिधानः ।।

# विभिन्न राजसभासु

अध्ययन समाप्त्यनन्तरं कवे: प्रथमः सम्बन्धः कैथलनरेशेन सहाभवत्। तत्र कतिपय वर्षाणि यावत् राजकविपदमलंकृत्य पंजावनरेशस्य म० रणजीतसिंहस्य सभायां सम्मानितपदमलभत। तत्रापि महाराजस्य मृत्योरनन्तरं राज्यविप्लवे जाते कविः पटियालानरेशस्य सभायां स्वपूर्वोचित स्थानमेव समाससाद। तत्र निवसता तेन कतिपयग्रंथानां विरचनमकारि: यथा—वृत्त-मुक्तावलिः, वृत्त-चिन्तामणिरित्यादि। परं तत्र राजसंसदि प्रवर्तमानेऽन्तरंगषड्यन्त्रचक्रे राजकोपभागभवत्। येन कविः राज्यं त्यक्त्वा जम्मूकाश्मीरनरेशस्य श्रीमतः गोलाबसिंहस्याश्रयवर्ती समभवत्। १८५८ ईसवीये यदा म० गोलाबसिंहस्य महाप्रयाणमभवत् तदा कविः सुतरामेव नवीनशासितुर्महाराजरणवीरसिंहस्य सभापण्डितपदवीमधिगतवान्। अस्मिन् पदे समारुह्य कविः पूर्वतोऽधिकां साधिकारां प्रतिष्ठामवाप। स राजकविः, राजपण्डितः महाराजकुमारस्य (श्री प्रतापसिंह) अध्यापकश्चाभवत्। म० रणवीरसिंहाज्ञां शिरोधार्य तेन राजप्रासादे एका विद्वत्सभा संस्थापिता यस्याः

---

२. येन स्वयं नयविचारविदा विनीतो नीतो जनो निजवशे विमुखीकृतोऽन्यैः।
एकाकिनेति नगरे मुखपुण्डरीके जेगीयते जनगणैरधुनापि नित्यम् ॥

३. तस्यात्मजो जनमनोहरतुल्यरूपो काले शुभेऽखिलविशेषगुणैर्विशिष्टो।
जातो क्रमेण कियता समयेन भक्त्या शम्भोर्नगेन्द्रतनमाश्रितदेहयष्टेः।

४. अन्योऽन्यभावविशदीकृतकर्मतन्त्रौ नित्यात्मकर्मविधिसंचितदिव्यमन्त्रौ ॥
श्रीचण्डिका- सततपूजन- लब्धसिद्धी सिद्धावितिप्रथितसर्वजनप्रसिद्धी ॥

५. प्रीत्या परस्परमनिंदितभाववृद्धी सन्नीतिरीतिविलसत्परिशुद्धवुद्धी।
... ... ... ... ...

६. श्रीपुण्डरीकनगरे नरराजमान्यौ सूर्याविवामलधियौ तपसः प्रभावात्।
ज्येष्ठस्तयोस्सकललोकसुपूजिताङ्घ्रिः स श्रीश्वरीसहितदत्त(ईश्वरीदत्त)पदाभिधेयः

७. ज्योतिः प्रबन्धविषये रविरेव साक्षात् पुत्रत्रयेण सहितो जयते जगत्यां।
... ... ... ... ...

८. लोकोपकारकरणैकमनः कनीयान् दुर्गादिदत्त इति संस्फुटनामधेयः।
सत्पुत्रयुग्मसहितो जयतेतरां यः शम्भोर्यथा करिवरास्यकुमारयुक्तः ॥

नाम "विद्या-विलास" इत्यासीत् । इयं सभा राजप्रचालिता सती जम्मू-काश्मीर राज्यांतर्गतानां तथा भारतस्य विभिन्नप्रदेशेभ्य आगतानां विदुषां केन्द्रस्थानमभवत् । प्रतिसौमवासरे विद्वद्गोष्ठ्यां भिन्न - भिन्न विषयेषु शास्त्रार्थाः वादविवादाश्च प्रावर्तन्त, यत्र चण्डिदासः नियोजकत्वं निर्वाहयतिस्म. शास्त्रार्थाः वाचिकाः लिखिताश्चाभवन् ★ । एवञ्च कविः ईसवीय सन् १८५७-त आरम्य महाराज रणवीरसिंहस्य मृत्युपर्यंतं (१८८५ ई०) जम्मू-काश्मीर राज्ये निर्दिष्टां प्रतिष्ठामत्राध्याध्युवास । तदनंतरञ्च स्वजन्मस्थाने पुण्डरीके गतवान् । अष्टाविंशति वर्षाणि यावत् जम्मू-नगरे समध्युष्य चण्डिदासेन अनुमानतः विंशतिसंख्याकानां गद्य-पद्यमयकवित्वपूर्णग्रंथानां विरचनमकारि । तेषु प्रस्तुतं "रघुनाथगुणोदयः" महाकाव्यं सर्वातिशायीति पर्यालोचनेन सम्यक् स्पष्टी भवति ।

## रघुनाथगुणोदयः

त्रयोदशसर्गात्मके महाकाव्येऽस्मिन् रामकथा निबद्धास्ति । काव्यस्य

---

९. रम्ये वसन्तसमये परचैत्रमासे शुक्लेदले शुभतिथौ च चतुर्थिकायाम् ।
कुम्भोदये स्वपरमोच्चगतेऽब्जबन्धौ साकं वुधेन भवने खलु विक्रमाख्ये ॥
१०. केन्द्रे सुखं समधिगम्य तथा च तुंगे संस्थेऽष्टवर्गबलसंयुजि शीतरश्मौ ।
स्वीयांगनापरिचितेऽधिपतौ द्वितीये कर्माभिधेय भवनस्य च भूमिपुत्रे ॥
११. भाग्यस्थिते सुरगुरावसुराधिपे च स्वीये पदेऽति सबले सुखभावसंस्थे ।
सूर्यात्मजेऽष्टमगते च तुलाभिलाषे राहोर्व्यये रिपुविनाशिनि केतुकेऽरौ ॥
१२. सद्रत्नभूमिसुखदेषु बलप्रदेषु सूर्यक्षपाधिपति चन्द्रमुखेषु शश्वत् ।
इत्थं स्वकीयभवनात्ममहोच्चगेषु भूपालतो विपुलभोग महर्थदेषु ॥
१३. तस्मिन्नितांतजपयज्ञनिविष्टचिताज्जातोऽहमस्मि कविरार्ययशोऽभिलाषी ।
चण्डीसहाय इति संप्रथिताभिधानो देवीप्रसन्नविदितानुज सेव्यमानः ॥
१४. सोऽहं निशम्य कविराजकथाप्रबन्धानालोक्य कांश्चिदपि जातमहाप्रमोदः ।
वाचानया किमपि कर्तुं मुदान्वितः सन् सत्पण्डितेषु कवयामि च तान्नमामि ।
(वृत्तमुक्तावल्याः भूमिकायाम्)

★ शास्त्रार्थानां कानिचित् पत्राणि मया समुपलब्धानि ।

सांगोपाङ्ग पर्यालोचनेन ज्ञायते यत् कविना काव्यस्यास्य निर्माणे माघ-भारवि - कालिदास - श्रीहर्षप्रभृति- कविपुंगवानां काव्यमार्गानुयायित्व-मप्यग्राहि । महाकवि - कालिदासीय रघुवंशस्य प्रभावग्रहणं विशेषतः कृतमिति । केषुचित् स्थलेषु अपरेषां कवीनां कल्पना आदाय स्वललित-भाषायां संग्रथिता इत्यपि दृक्पथमवतीर्णम् । तथापि कवेः स्वमौलिकता मौलिक कल्पनाञ्च अतीव रमणीया इत्यपि प्रतिपादयितुं शक्यते ।

अस्मिन् काव्ये दशरथस्याश्वमेधयज्ञात् रामजन्मतश्चारभ्य लंका-विजयोत्तरमयोध्याराज्यग्रहणपर्यन्तमेव रामकथा निबद्धास्ति । इमामेव कथामादाय त्रयोदश सर्गाः कविकल्पनाप्रसङ्गेन विस्तरशो विनिर्मिताः यत्रान्तिमे सर्गे संस्कृतगद्यगिरा जम्मूनगर्याः सौंदर्यमुपवर्णितम् । एष गद्य-सन्दर्भः महाकविबाणकोटिक इति निस्सन्देह वक्तुं पार्यते। अस्य सर्गस्य निर्माणयुगे जम्मू- नगरी कीदृशे स्वकीये वास्तविकस्वरूपे स्थितासीदिति यदवगम्यते तदतीव रोचकतत्वं वर्तमानानुसन्धित्सूनां छात्राणां कृते । अनेन विषयेन सह महाराज रणवीरसिंहस्य संस्कृतसाहित्याभिवर्धनदिशायामभिरुचि-विषयेऽपि प्रशंसात्मको भागः विनियोजितः । येनोक्त महाराजस्य साहित्यिक-क्रियाकलापस्य विषये वास्तविकं चित्रं समुल्लसति । इदं चित्रं कविदृष्ट्वा-त्वदुपवर्णनं विशेषतो प्रामाणिकं रोचकञ्च ।

## कथावस्तु

मदुक्तं पूर्वमेव मदस्या रचनायाः कथावस्तु पुत्रकामनया दशरथस्य पुत्रेष्टियज्ञादारभ्य रामजन्म, लंकाविजयः, पुनश्चायोध्यां प्रतिनिवृत्य रामस्य राजसिंहासनारोहणं राज्यसंचालनञ्चेतावानेव कथाप्रसंगोऽत्रोपनिबद्धः । परं प्रतिसर्गं कथाया विभागः कीदृश इत्यभिलक्ष्य किंचिद् विव्रियते :—

**प्रथमे सर्गे**ऽयोध्याया अतिरमणीयं वर्णनचित्रमुद्घाटितं यत्कल्पना-परिपूर्णं सालंकारंचास्ति । दशरथप्रतापवर्णनं चन्द्रोदयवर्णनं दम्पत्योः सरस-वार्तालापः निशावर्णनञ्चेमे प्रसंगाः मुख्यरूपेणास्मिन् सर्गे समुपवर्णिताः ।

**द्वितीये सर्गे** ससैन्यं दशरथस्य रोमपादनगरीं प्रति प्रस्थानं; ऋष्यशृङ्गद्वारा यज्ञविधानसम्पादनं, रामादीना चतुर्णां राजपुत्राणां समुत्पत्ति-रेतावान् प्रसंगऽस्मिन् सर्गे समुपनिबद्धोऽस्ति। अस्मिन् सर्गे कविकल्पना. अलंकारप्रयोगचातुर्यञ्च द्वयमेवाधिकमात्रया प्रस्फुटितम्। विशेषत उपमा-लंकारप्रयोगो रमणीयो दृश्यते।

**तृतीये सर्गे** रामादिचतुर्णां राजकुमाराणां बाल्यकिशोरावस्थयोर्वर्णनं तेषां नामकरणोपनयनादि संस्काराश्च सुचारुरूपेणोपवर्णिताः एवञ्च यज्ञ-रक्षणाय समागतेन विश्वामित्रमहर्षिणा सह द्वयोः कुमारयोः ऋष्याश्रमे सम्प्रेषणस्य कथांशोऽप्यत्रैवोपनिबद्धः।

**चतुर्थे सर्गे** रामस्य यज्ञरक्षाताटकावधमिथिलागमनप्रसंगानां वर्णनं कृतमस्ति। अस्मिन् प्रसंगे प्रकृतिवर्णनं विशेषतो द्रष्टव्यमस्ति यस्मिन् कविकल्पनाया अतीव रमणीयता प्रस्फुटितास्ति।

**पञ्चमे सर्गे** रामस्य गुणगणवर्णनं सौंदर्यस्य वैशिष्ट्यप्रदर्शनञ्चा-तिशयोक्त्यातीव चित्ताकर्षकम्। अस्मिन् रूपकोपमातिशयोक्त्युत्प्रेक्षादयो-ऽलंकाराः साधुसन्निवेशिताः सन्ति। परन्तु रामसौन्दर्यवर्णने कविचण्डिदासेन श्रीहर्षकवेः नैषधचरित-महाकाव्यस्य प्रभावोऽपि यत्रतत्रावश्यं गृहीत इति स्पष्टं भवति।

**षष्ठे सर्गे**ऽपि अयमेव विषयः प्रकारान्तरेणोपवर्णितः। तत्र सीताया रामं प्रत्यनुरागवर्णनं तया च प्रेषिता काचित्सखी रामसमीपे गत्वा सीताया विरहदशां प्रदर्शयतीति प्रसंगोऽपि साधु यथास्यात्तथोपवर्णितोऽस्ति।

**सप्तमे सर्गे** रामस्य धनुष्भङ्गः सीताया रामेण सह विवाहोऽयोध्या-प्रस्थानं चैतदुपवर्णितम्।

**अष्टमे सर्गे** रामस्याभिषेकार्थं दशरथस्य मन्त्रिभिः सह परामर्शः राजसभायाश्चायोजनम्। अस्मिन् प्रसंगे सर्गान्तं गहनराजनीतेः बिस्तरशः बर्णनं कृतमस्ति यत् कवेः राजनीति पांडित्यं प्रकटयति।

**नवमे सर्गे** रामस्य वनवासः तत्र वनगमनप्रसंगे मार्गे समागतानां ऋष्याश्रमाणां वर्णनं तथा च ऋषिभिः सह रामस्य साक्षात्कारः एवंविधाः कथांशाः उपन्यस्ताः ।

**दशमे सर्गे** सीताहरणं लंकायुद्धवर्णनञ्चास्ति । अनयोः द्वयोः सर्गयोः चित्रकाव्यच्छटा शब्दकेलिश्च द्वयमेवोत्कृष्टकोट्यामधिरूढं दृश्यते ।

**एकादशे सर्गे** लंकाविजयानन्तरं रामसीतयोरयोध्यां प्रति प्रस्थानं मार्गस्थ नदीनदवनादीनां रामद्वारा वर्णनम् । अस्मिन् प्रसंगेऽपि कविना कालिदासीय वर्णनप्रकारस्य पूर्णः प्रभावः परिगृहीतः । परन्तु भाषाच्छन्दसि स्वकीय एवास्तः । छन्दोऽपि द्रुतविलम्बितमस्ति ।

**द्वादशे सर्गे** रामस्य राज्यकरणं, मृगया, षडृतुवर्णनमित्यादि ।

**त्रयोदशे सर्गे** महाराजरणवीरसिंहस्य विद्याप्रेम, काव्यलेखन-प्रयोजनं तथा जम्मूनगर्याः वर्णनमस्ति ।

## काव्यनिर्माण- समयः

काव्यस्यास्य निर्माणाय स्वयं महाराजरणवीरसिंहेन कविं प्रत्याज्ञा-पत्रमप्रैषि तदिदं विशेषतः निर्दिष्टमासीद्यत् काव्यं व्यावहारिकं, रामकथोपेतं, बालबोधकं, नीतिविषकं च स्यात् । पत्रं गणेशपण्डितहस्तलिखितमस्ति । पत्रस्याधः "सम्वत् १९२७ भाद्रों प्र० ३"—इति लिखितमस्ति । पत्रस्य भाषा डोगरी-हिन्दीमिश्रितास्ति । किन्तु हस्ताक्षराणां स्पष्टत्वात् सुपाठ्यत्व-मप्यस्ति । अस्य पत्रस्यैतिहासिकं मूल्यं पृथगेवास्ति* ।

पत्रागमने कविः काव्यलेखने सम्प्रवृत्तः । एवंच वर्षाभ्यन्तरमेव

---

* ओम्

स्वस्ति श्री कवि चण्डीसहायजी, श्रीसरकारजी दे हुकम मूजब आपको लिखा जाता है कि आप एक काव्य तयार करो कि उसमें काव्य और काव्यांग सब आ जावे और अर्थ उसका राजनीति विषयक होवे व्यवहार विषयक होवे ।

सम्वत् १९२७ भाद्रो ३ —गणेश

तेनेदं समग्रं महाकाव्यमुपनिबद्धमिति प्रतीयते। एवञ्च ज्ञायते यत् काव्यस्य निर्माणं सम्वत् १९२८ अथवा सन् १८७१ तमे ईसवीयेऽभवत्। काव्यस्य सम्पूर्तौ धर्मार्थ विभागेन परीक्षार्थं काव्यमिदं वाराणस्याः विदुषां समक्षमप्रैष्यत। तत्रत्याः ये निर्णायकाः विद्वांसो नियुक्ता अभवन् तेषां नामानि सम्मतयश्चाधः निर्दिश्यन्ते :—

१. सम्मतिरत्र भट्टोपाह्व सखारामशर्म्मणः।
२. अवलोकितमिदं काव्यं नृसिंहशास्त्रिणा समीचीनमिदम् :
३. कृतसम्मतिरत्र रमानाथ शर्म्मा।
४. सम्मतिरत्र गौरीशंकर शर्म्मणः।
५. सम्मतोऽयं ग्रंथो विद्वद्वर चन्द्रशेखर शर्म्मणः।
६. कृतसम्मतिकोऽत्र विञ्चेत्युपाह्व भैरवदत्त शर्म्मा।
७. सम्मतिरत्र हरिकृष्ण व्यासस्य।
८. सम्मतिरत्र पण्डित वसतिराम शर्म्मणः।

आसां सम्मतीनां विषये श्लोकमेकमधः कवि चण्डिदासद्वारा व्यलेखि। येन प्रतीयते यदिदं काव्यं धर्मार्थ महकमा (Dharmarth Trust, Jammu) द्वारैव तत्र विदुषां समक्षे समप्रैषि श्लोकं यथा—

चण्डिसहायरचिते रघुनाथ गुणोदये।
सम्मतिर्विदुषामग्रे कृता मोहकमेन वै॥

महाराज रणवीरसिंह महोदयैः सभाविदुषां नवनिर्मितसंस्कृतग्रन्थानां मुद्रणाय "विद्याविलास" इति नाम्नैको मुद्रणालयोऽस्थापि। यस्मात् बहवो ग्रंथाः मुद्रतां गताः। महदिदमाश्चर्यं यदिदं महाकाव्यं महाराजेन स्वराजकीयाज्ञया कवि द्वारा निर्मापितमासीदेतत् कृत्वास्य मुद्रणमन्यग्रंथापेक्षयाधिकमावश्यकमासीत्परं तथाप्यस्य पांडुलिपिद्वयं कारयित्वा रघुनाथमन्दिरपुस्तकालये तत्प्रस्थापितं किन्तु न मुद्रितम्। अत्र सम्भवतः कतिपय कारणानि समभवन्नित्यनुमीयते। दुर्भाग्यवशेन तस्मादारम्याद्यप्रभृति यावत् काव्यमिदं पाण्डुलिपिरूपेणैवातिष्ठत्। उपर्युक्तं पाण्डुलिपिद्वयं रघुनाथ-

मन्दिर पुस्तकालये (जम्मू नगरे) इदानीमपि समुपलभ्यते। एका पाडुलिपि: कविहस्तलिखिता मया कविगृहे (हरियाणा प्रदेशान्तर्गत पुण्डरी नगरे) समुपलब्धा। इदमेव पाण्डुलिपित्रयमिदानीं भारते समुपलभ्यते इत्यन्तर्देशीय संस्कृत पांडुलिपिविवरणिकाभ्य: स्पष्टी भवति।

## कवेरन्या: रचना:

कवेलिखिता अन्या: काचन रचना: अनुसन्धानप्रवृत्तस्य मम हस्ते लग्ना:। या कविहस्तलिखिता एव सन्ति। इमा: पांडुलिपयो मया सुरक्षिता: सन्ति। इत: पूर्वं केवलमेकैव रचना "अह्निक पद्धति:" जम्मू- काश्मीरराज्य द्वारा प्रकाशिताभवत्। इत: परं न कोऽपि ग्रन्थ: कविकृतित्वमादाय साहित्य-क्षेत्रेऽवतीर्ण:। एवञ्च कविचण्डिदासनाम्नापि केचन एव परिचिता आसन्। किञ्चास्य प्रारम्भिक नाम चण्डीसहायस्ततश्च चण्डिदास इति प्रसिद्धिमवाप।

सौभाग्यवशान्मम हस्ते आपातत एव कविरचित ग्रन्थानां स्वल्प एव समुच्चय आपतित:। तेषु एकादशग्रन्था मया "चण्डिदास ग्रन्थावलि:" नाम्ना सम्पाद्य प्रकाशिता: शेषे च पांडुलिपीनां रूपेण मम पार्श्वे सुरक्षिता सन्ति। समुपलब्धा सर्वे ग्रंथा निम्ननिर्दिष्टा: सन्ति :—

| | | |
|---|---|---|
| १. | अन्योक्ति जलधि: | लघुकाव्यम्। |
| २. | सवाई रामसिंह प्रशस्ति | ,, |
| ३. | राधासुन्दर भक्तिबोध: | हिन्दीग्रथस्य संस्कृतकवितायां भावानुवाद: |
| ४. | समाजोत्सव: | महाराज रणवीरसिंहसभायां समागतनां वैदेशिकातिथीनां विषये समारोहवर्णनम्। (लघुकाव्यम्) |
| ५. | देविकास्तुति: | अष्टकम् |
| ६. | सम्भृत संविधानकम् | महा० रणवीरसिंहस्य पुत्रीविवाहोत्सव वर्णनम् (लघुकाव्यम्) |
| ७. | उर्दू- संस्कृतशिक्षकम् | |
| ८. | त्रिकुटाष्टकम | |

९. श्रीगदाधराष्टकम्
१०. अरबी वर्णमाला शिक्षकम्
११. उमापत्यष्टकम्
१२. वर्णसंसृष्टिः
१३. हरिहरस्तोत्रम्
१४- मङ्गलाष्टकम्
१५. रामप्रतापोदयः महाकाव्यम् (अपूर्णम्)
१६. रघुनाथगुणोदयः महाकाव्यम् (पूर्णम्)

कवेः काचन रचनाः (पब्लिक लाइबरेरी) पटियाला नगरेऽपि पाण्डुलिपिरूपेण सुरक्षिताः सन्ति। तेषां नामानि यथा :—

१. वृत्तचिन्तामणिः छन्दसां ग्रन्थः
२. वृत्तमुक्तावलिः ,,
३. परदाराभिमर्शगमन- दण्डविधि धर्मशास्त्रीयो निबन्धः

उपर्युक्ताः कविलेखनीप्रसूताः ग्रन्था एवेदानीं समुपलब्धाः। कविलिखिता शेषा सामग्री कियत्या मात्रया कालांतरेण विनष्टा इति वक्तुं न पार्यते। परन्तु एतदनुमीयते यत्तेन प्रभूतं लिखितमभवत् यदिदानीं साकल्येन नोपलभ्यते।

## प्रस्तुतमहाकाव्यस्य सम्पादनम्

उपर्युक्त पांडुलिपित्रयं महाकविहस्तलिखित पाण्डुलिपिमादायैवेदं सम्पादनकार्यमारब्धमासीत्, किन्तु पाठांतर संयोजनकर्मणि शेष हस्तलेखद्वयमपि मया सम्यगुपयोगितां नीतम्। एवञ्च त्रयाणामेव हस्तलेखानां साहाय्येन तथा च कविरचितस्य "रामप्रतापोदय" महाकाव्यस्य (नवमसर्गपर्यन्तमेवोपलब्धम्) हस्तलेखादपि पूर्णसाहाय्यमस्मिन् कर्मणि मयोपलब्धम्। यतो हि काव्यस्यास्य पाठः "रघुनाथगुणोदय" पाठेन सह समधिकं साम्यमावहति। यत्र- यत्र मया पाठान्तरमुपलब्धं तत्र- तत्रैव लघुपाद टिप्पण्यां

(Foot-note) सन्निहितम्। पूर्वन्तु कविहस्तलिखिता पांडुलिपिः एक-शतोत्तरत्रिंशति वर्षवयस्का सती समधिका जीर्णशीर्णाभवत् ततोऽपि कविना प्रतिपृष्ठं संशोधनचिन्हानि अतिसघनत्वेन निवेशितानि यत्र मसिप्रसारकारणा-दक्षराण्यत्यस्पष्टानि सञ्जातानि। तत् पठने मम महान् परिश्रमः जातः ततश्च प्रतिलिपिकरणे पुनश्चावशिष्टहस्तलेखत्रयाणां प्रतिश्लोकपाठेन पाठ-सम्मेलनेऽपि महान् परिश्रमो सजातः। आनुसन्धानिकीं नव्यां सम्पादनपद्धति-मनुसृत्य मयैतत् संस्करणं महता परिश्रमेणैकवर्षाभ्यन्रे सज्जीकृतम्।

एतस्मिन् कर्मणि स्वाभाविकास्त्रुटयो यद्युपलभ्येरन् तदाहं क्षमार्हो भविष्यामि विद्वद्भिरित्याशासे। अपि चाहं शतशः धन्यवादान्वितरामि केन्द्रीय संस्कृतसंस्थानाय येन ग्रंथस्यास्य प्रकाशनाय सर्वं व्ययजातमतिवाह्य मम परिश्रमस्य न केवलं मूल्यांकनमेव कृतमपि तु ममोत्साहस्यापि वर्धनं कृत्वा नवीनमहाकाव्यरत्नं संस्कृतसाहित्याय समर्पितम्।

गङ्गादत्तः

केसरी-कुटीरम्,
मुहल्ला पहाड़ियाँ,
जम्मू तवी।

ॐ

श्री गणेशाय नमः

श्रीरघुनाथगुणोदय-महाकाव्ये

# प्रथमः सर्गः

यतो जातं जगत्सर्वं श्लिष्टमात्मभृता मया ॥
तं वाचार्थमिवालम्बे श्रीशं शब्दार्थसिद्धये ॥ १ ॥

गिरां देवीं समभ्यर्च्य शुद्धये स्वगिरामहम् ॥
कुर्वे काव्यमुदारार्थं रघुनाथ - गुणोदयम् ॥ २ ॥

गुणाः श्री रघुनाथस्य क्व क्षीराम्बुनिधेः समाः ॥
क्वाहं चाल्पगतिस्तत्र यत्र हंसाः ससंशयाः ॥ ३ ॥

ईक्षिताब्धेः[1] स तत्रापि दुस्तरोऽहं तु वीक्षकः ।।
केवलायाः सरस्वत्याः पल्वलस्येव टिट्टिभः ।। ४ ।।

सोऽस्तु[2] सन्देहवाँस्तत्र दुस्तरोऽसौ भविष्यति ।।
तितीर्षोः सहसा यो मे टिट्टिभस्येव पक्षिराट् ।। ५ ।।

पुरी श्रीराघवेन्द्रस्य राजते चापि विश्रुता ।।
अयोध्येति दुरापान्यैरिन्द्रस्येवामरावती ।। ६ ।।

दुर्लंघ्या देवमायेव या प्रयत्नपरैः परैः ।।
रम्या साहित्यविद्येव विचित्रार्थपदैः पदैः ।। ७ ।।

परितः प्रवरापारवारिराशि-परम्परा ।।
विभावरी[3] विलसन्ती पराभूतेरगोचरा ।। ८ ।।

सफेनयाङ्कस्थितया सरय्वा रामवल्लभा ।।
हासयन्ती भुवं सम्या[4] सपत्नीमिव साप्रिया ।। ९ ।।

रत्नभारजिताकाशैः क्रीडागारैः पताकिभिः ।।
निरुद्धोरुपथैः सिद्धविमानालोकभासुरा ।। १० ।।

घनोन्नतेन वप्रेण बद्धेन परितो भृशम् ।।
मुदिता मध्यमावृत्य कुलयोषेव वाससा ।। ११ ।।

अगाधसलिलां स्निग्धामलंघ्यामलधीयसीम् ।।
प्रकाशयन्ती परिखां कन्याकाञ्चीमिवाभितः ।। १२ ।।

---

1—(ईक्षिताब्धिः)

2—Mss. 1, 2, सोऽस्तु (सोऽहं)

3—Mss. 1, 2 विभावरी विलसन्ती (विभावरीव विलसन्ती)

4—Mss. 1, 2 (सौम्या)

सतोरणोल्लसद्धस्ति- नखा- प्राकार- मण्डिता ॥
अखण्डितार्थगमना समुच्छ्रायितगोपुरा ॥ १३ ॥

विकीर्णनानाकुसुमं परिसिक्तपयोंतरम् ॥
समं राजपथं रम्यं वहंत्यन्वहमुज्ज्वलम् ॥ १४ ॥

लसदुच्चैरुदाराश्म यन्त्रारूढ़कपाटिका ॥
आरूढचितापणिका समूढागुरुगन्धिका ॥ १५ ॥

मनोः प्रादुर्बभूवाद्यान्नृपादेकावनौ पुरा ॥
निदानं राजधानीनां मायाबृत्तिरिवात्मनः ॥ १६ ॥

क्रमेणोपगतां गुर्वीं राजा दशरथो निजाम् ॥
जगतीं तामधिष्ठाय शशासोदधिमेखलाम् ॥ १७ ॥

प्राप्य सिंहासनं पित्र्यं रञ्जयामास स प्रजाः ॥
दर्शयन् राज्यसंप्राप्तेः फलं लोकानुरंजनम् ॥ १८ ॥

सतामभेद्यामपरैः परचारविवर्जिताम् ॥
सदोपगूढामकरोन्मन्त्रशक्तिमिवात्मिकाम् ॥ १९ ॥

अधिज्यधन्वाधिवसन्नमितां[1] पृथ्वीभृताम् ॥
सर्वेषामप्यसह्योऽभूत् स शुचौ भानुमानिव ॥ २० ॥

वाक्सुधेव शशीव श्रीः करः कल्पलतासमः ॥
आत्मा तस्य सुधर्माब्धेः देवदेवस्य चाभवत् ॥ २१ ॥

युग्मं यथा :—
पावकी पन्यरैरन्यैर[2]णीयान्ननुयायायिभिः ॥
कल्पवृक्षायमानः स पुत्रमानमतन्प्रजाः ॥ २२ ॥

---

1—Mss. 1, 2 अधिवसन्नमितां (अधिवसन्नभितः)

2—Mss. 1, 2 पन्यरैरन्यैः (पुण्यशीलैस्तै...)

मन्त्रिभिर्मानियन्देवगोब्राह्मणकुलानि च ॥
गोविन्दवेदं सोऽवेदि राजसिंहो नृपासने ॥ २३ ॥

यं यं नेत्राम्बुजेनासौ सुददर्श[1] मनागपि ॥
तं तं चिरविलासिन्यो भेजिरे सर्वसम्पदः ॥ २४ ॥

प्रशशंसुस्तमालोक्य सन्नद्धे समरे भटाः ॥
वीर्यं शौर्यमिवोदग्रं शौर्यं वीर्यमिवाधिकम् ॥ २५ ॥

सुधासमं वचो वाणीसमाश्रीः श्रीसदृग्वपुः ॥
वयोस्तुल्यं बलं तस्य बलवद्विक्रमोऽभवत् ॥ २६ ॥

क्रियमाणं कृतं कार्यं तेन यद्यच्च तत्फलम् ॥
तत्सर्वं काकतालीयमकस्मात्तस्य चैक्षत ॥ २७ ॥

न मनोऽनन्दनो विघ्नः स तदुच्येत यत्समः ॥
नेत्रासेचनकं नापि यस्य तुल्यो भवेदिह ॥ २८ ॥

सुवृत्तदीर्घभुजयोर्विस्तृतो वक्ष- ईक्षणे ॥
विपुलोऽसौ न केषाञ्चिन्मनोवृत्ति जहार सः ॥ २९ ॥

समा परेऽपि चात्मीयाः शीलशौर्यदयादिकान् ॥
निश्चिच्छु[2]रचलश्चित्तास्तद्गुणास्तद्गुणानिव ॥ ३० ॥

साक्षाद्दृग्धारिकामस्य शम्भोराशासतो धराम् ॥
समान[3]मयुतं किञ्चिद्वियुतं तस्य निर्ययौ ॥ ३१ ॥

---

1—Mss. 1, 2 (सन्ददर्श)

2—Mss. 1, 2 निश्चच्छुः (निश्चिक्युः)

3—Mss. 1, 2 समान (समाना)

प्रस्तावे पुत्रकामस्य शैशवस्यैकदात्मनः ॥
पूर्वोक्ता केन पुत्रेष्टिर्जगाहे तस्य मानसम् ॥ ३२ ॥

ततोऽन्वपृच्छन्नृपतिः सर्वज्ञं मुनिमादरात् ॥
अहं वेद्मि भवान् पूर्वं मयेष्टिं तामचीकरत् ॥ ३३ ॥

सत्यं मया निदिष्टेन भवता तच्चिकीर्षया ॥
सर्वोपकरणं तस्य भाण्डागारेऽस्ति सम्भृतम् ॥ ३४ ॥

शक्नोमि तां न वा कर्तुमिति मे संशयोऽधुना ॥
सुविशिश्रमिषोः क्वापि क्षणं न्यस्य धराधुरम् ॥ ३५ ॥

अपरोऽयं प्रभावस्ते श्रीरप्यैषा परैव ते ॥
वचो भंगीयमवनीप्रभोऽत्यन्तविलक्षणा ॥ ३६ ॥

समूलघातं निहताः सपत्नाः निर्जितावनिः ॥
अप्रयत्नाः कृता देवाः द्विषत्तापोपशांतये ॥ ३७ ॥

राजसे राजशार्दूल त्वं क्षितौ कल्पवृक्षवत् ॥
इयान् किन्तु विशेषोस्ति सोऽनभिज्ञोभवान्पटुः ॥ ३८ ॥

यत्र कुत्रोरु तृषार्तस्य वीक्ष्यमाणस्य भूभृतः ॥
मृषा तच्चाक्षुषं तस्य भवद्गोचरतां विना ॥ ३९ ॥

नाराचास्तद्धनुर्मुक्ताः वपुर्निर्भिद्य विद्विषाम् ॥
दृश्यन्ते निर्विशन्तोऽन्तर्धरायाः पन्नगा इव ॥ ४० ॥

अलक्षितेषु सन्धानमोचनोऽनुरणं भवान् ॥
उच्यतेऽप्यापि किं बाणान् सिंजिन्याधिवर्षति ॥ ४१ ॥

तवाह्वानं सुरेन्द्रस्य साहाय्ये यत्त्वदाशुगैः ॥
हतानां ते द्विषां तत्र हेतुः पिशुनता ध्रुवम् ॥ ४२ ॥

---

**1—Msss. 1, 2** (शिंजिन्या...)

वेगे भवत्कलंबानां दृष्टे को निश्चिनोति नो ॥
मानसे वात नेरौघ मनसां मन्दगामिताम्[1] ॥ ४३ ॥

पुरैव व्यथते शत्रोः हृदयं वैरिमर्दन ॥
पश्चाद्विशंति तत्राशु तव तीक्ष्णाः शिलीमुखाः ॥ ४४ ॥

जवेन पिदधत्याजौ सैनिकास्तेऽन्यभूभुजः ॥
ते दीर्घनिद्रां गामितास्तिरन्तीव वसुन्धराम् ॥ ४५ ॥

कोशलेशकृतादेशे त्वयि देशविवित्सया ॥
स्वे परे च समीक्षन्ते सहोपायनपाणयः ॥ ४६ ॥

आयातीत्युदितेऽनर्थवादं त्वद्वैरियोषिताम् ॥
भवेत् समर्थितप्रायं [2]तानवेन तु तत्क्षणम् ॥४७ ॥

कषायोऽपि धिनोत्येव कुतश्चित् स्वाश्रितान्भवान् ॥

अरुणिम्नोदयस्येन्दोर्वपुर्निर्भिद्य विद्विषाम् ॥

दृश्यन्ते[3] निर्विशंतोन्तर्धरायाः पन्नगा इव ॥ ४८ ॥

भवेद्भवतोभूमिरन्या राजन्वतीतमी ॥
युक्ताऽपि ग्रहनक्षत्रैः शशिनेव प्रभावती ॥ ५९ ॥

सायंतनाय विधये सरागा तीर्थसन्निधौ ॥
इयमुत्कण्ठिता संध्या स्वजनं हि यदीहते ॥ ५० ॥

---

1—Mss. 1, 2 (मानसे वा तनोः रोधे मनसः मन्दगामिताम् ।)

2—Mss. 1, 2 तानवेन (तद्रवेण)

3—Mss. 1, 2 (?)

## अथ चन्द्रोदयवर्णनम् :

पूर्वा हरिदपि श्यामेवोद्धता तमसावृता ॥
उदेति रागमाधित्सुरस्यामेव कलानिधिः ॥ ५१ ॥

शमयन्सर्वतस्तापं निदधत्सर्वतो रसम् ॥
कथं माभून्न सर्वेषां दर्शनीयो हिमद्युतिः ॥ ५२ ॥

अपथे वर्तमानस्य महेन्द्रस्य सहायताम् ॥
कुर्वन्नेष फलं लेभे नियतं मृगलांच्छनम् ॥ ५३ ॥

अयमुज्जृम्भमाणायाः कुमुद्वत्याश्चटध्वनिः ॥
छूत्कंचुकीबन्धात्प्रतिवाप्यनुभूयते[1] ॥ ५४ ॥

विधिरासाधितः साध्यो याम्यहं द्रष्टुमाश्रमम् ॥
सपत्नीकस्त्वया कार्यमवरोध निरीक्षणम् ॥ ५५ ॥

सपक्षो वा विपक्षो वा यो विशेषेण पश्यति ॥
विशेषदृक्सर्वोऽपि समये स्थानमीक्षते ॥ ५६ ॥

गतेस्मिन् निवासाय निर्वर्ण्योति मुनीश्वरे ॥
अपियास ततः सोऽपि कृततत्समयोचितः ॥ ५७ ॥

सानुरागः श्रियं बिभ्रत्तन्निशां तमभिव्रजन् ॥
स तत्राधिकृतं पूर्णं कौशल्यायै दशादिशत् ॥ ५८ ॥

---

1—Mss. 1, 2

(सुमनोदरसम्पर्कान्मयाप्यनुभूयते)

## निशा- वर्णनम् :

प्रहसन्नर्मसचिवं[1] प्रत्याहेति पुरोगता ॥
नीलाम्बरनिशाच्छन्ना तत्सखी गूढ़चारिणी ॥ ५६ ॥

एषा श्लाघ्यतराः सर्वा सर्वेषां सर्वथा दृशः ॥
सर्वत्र कुरुते साध्वी सुप्रकाशाभिलाषिणी ॥ ६० ॥

इयमासंजयत्येव सुखे सर्वमिति स्तुवन् ॥
जगामांतःपुरप्रांते सा निशा निर्विवेकताम् ॥ ६१ ॥

ब्रुवन्नेवं तदारूढो रत्नदीपप्रभावतीम् ॥
पूर्वश्रेणीं ददर्शाग्रे विचित्रां चित्रशालिकाम् ॥ ६२ ॥

अन्तर्विशत एवास्य[2] तिलपुष्पानिलोद्धतम् ॥
चित्रामिन्दूद्भवं सीरसौरभं हरते मनः ॥ ६३ ॥

वदन्नेवं स तत्रैव त्वरया पुत्रकामया ॥
कौशल्यया तदा स्नेहादभिपूज्याधिपूजया ॥ ६४ ॥

किंचिद्विविक्षुमालक्ष्य सा तं सालंकृति श्रिया ॥
तदान्यैव च वाक् तस्याः जल्पन्त्या ददृशे पुरा ॥ ६५ ॥

त्वत्पथेऽसीमसौंदर्यं श्रुता शोभा मृगीदृशाम् ॥
नासिकाऽऽभरणं कर्णे कर्णभूषा करांगुलौ ॥ ६६ ॥

---

1—Mss. 1, 2 (नर्मसचिवा)

2—Mss. 1, 2 (एवास्य)

खड्गः समुद्रजोऽयं ते नन्दकः स्वाधिनंदकः ॥
हतैतज्जात धाराब्धौ विलीनाः कोटिशोऽरयः ॥ ७७ ॥

त्वत्सैन्यसेतुसमया लङ्घितुं परवाहिनी ॥
नालमप्यंघ्रिमाधातुं निरुद्धास्ते शरव्रजैः ॥ ६८ ॥

क्वातिकोमलवर्ष्माणास्त्वत्सपत्ना इमे शिताः ॥
प्रभासयन्ते तूणीरं वज्रसाराः शराः क्व ते ॥ ६९ ॥

दिधिक्षोस्तेऽरिबाणस्यारुण्या मीलितदृशः ॥
ततः शौर्याश्मह्स्तेन न्यायो दहति ते शरः ॥ ७० ॥

सागसोऽपि नतिः शत्रोः पुनः स्वोच्च पदायते ॥
उन्नतिस्तत्पुरस्तस्य नीचैराचरणाय हि ॥ ७१ ॥

विधित्सता त्वया क्षोणीतलं निष्कण्टकं क्षणात् ॥
परोपकारिणा पूर्णं पदमैन्द्रं तथा कृतम् ॥ ७२ ॥

त्वद्यशः शौर्यसौन्दर्याप्यर्थिप्रत्यर्थिसुभ्रुवाम् ॥
विशत्युत्साहसन्तापानुरागैरन्वहं हृदि ॥ ७३ ॥

त्वच्चन्द्रहाससंपातसंपरेतैस्तवाहितैः ॥
सहशीतकरद्वेषि स्वर्यातं भवतो यशः ॥ ७४ ॥

स तथा तद्गिरः श्रुत्वा सस्मेरं सोऽपि सस्मितः ॥
आह चन्द्रोऽम्बुधेर्जातस्तस्मादेव चाम्बुधिः ॥ ७४ ॥

स तेन रुरुचे तन्वी जितपञ्चेषुकांतिना ॥
रतिर्वापहर्गारिण्या स तया शुशुभे तदा ॥ ७५ ॥

अन्योन्यमिति साकूतं समुदानन्दसंप्लुतौ ॥
शनैः शनैरनीयेतां सख्या तौ शयनालये ॥ ७६ ॥

सुखोपविष्टयोस्तत्र शयनीये तयोर्द्वयोः ॥
परस्परेण संलापाः पुनरासीन्मनोहराः ॥ ७७ ॥

वीक्ष्यात्मना पराभूतिं मन्वानेनामुना रवेः ॥
पश्यत्वन्मुखतादात्म्यवता निर्जितमिन्दुना ॥ ७८ ॥

नायमिंदुः सखे किन्तु किञ्चिदूनं शतक्रतोः ॥
पिण्डीकृतं यशस्तेऽद्य द्युचरैर्दृश्यते मुदा ॥ ७९ ॥

स एवोल्लसदेणांको वीक्ष्य त्वद्वक्त्रगौरवम् ॥
असारेणात्मना रात्रावूर्ध्वमाक्रमते प्रिय ॥८०॥

नायं शशि न तत्रैणः किन्तु यांत्या दिवाकरे ॥
त्वत्कीर्तिवज्रमञ्जूषा तन्मध्ये मृगनाभिका ॥ ८१ ॥

अस्माद्देशात्तमो दैनं निहत्यान्यत्र संगमे ॥
भानौ भामिनि तद्भासो विधुस्थस्तद्व्यपोहति ॥ ८२ ॥

नेमौ भास्वद्विधू किन्तु प्रतापयशसी तव ॥
परिवृत्योर्ध्वमारोहाद्यामिकावुपरीक्षकौ ॥ ८३ ॥

यथा त्वमुन्नयस्यास्यं दूरमेति तथा शशी ॥
खलून्नतौ न तिष्ठन्ति विपक्षस्यापि सुश्रियः ॥ ८४ ।

कन्दर्पकांतिदर्पघ्नावदनश्रीर्विभाव्यते ॥
बहिरन्तःपुरोऽन्यत्र सर्वदिक्षु त्वमेव मे ॥ ८६ ॥

वामाक्षियन्मृगाक्षीणां प्रणयोप्सित बोधकम् ॥
नेत्रवक्रत्वमन्यत्र तद्धितस्यप्रबोधकम् ॥ ८७ ॥

अनुभूतमिदं भाति भवतस्तु पदे पदे ॥
अरिश्रीगणिकापांगान् गृह्णात्येकमिषुं ददत् ॥ ८८ ॥

सत्यमित्यपि तारुण्यांकुरं दत्वैकमात्मसात् ॥
सुतनोस्तन्वि पञ्चेषुः कुरुते सेन्द्रियं मनः ॥ ८९ ॥

यौवनाद्रूपसम्पत्तिस्तस्याः सर्वाङ्गसौष्ठवम् ॥
लावण्यं तेन तलजा[1] बाढं नाथ नतभ्रुवाम् ॥ ९० ॥

यद्यप्येवं सुवृत्तोऽस्ति तथापि क्रियते स्थितिः ॥
[2]तस्यास्ते नागराः प्रयोऽवश्यं नायकात्मनि ॥ ९१ ॥

आकर्णलोचने कर्णोदंचिदोर्दण्डमण्डले ॥
दोर्दण्डविलसज्जानौ[3] सर्वं त्वय्येव नायके ॥ ९२ ॥

अवदातप्रतापस्य द्वपुषो[4] हृदयङ्गमम् ॥
सर्वस्योल्लसदाश्चर्यं माधुर्यं तव भूपते ॥ ९३ ॥

किं सुधांशो कलाः किं वा सन्मणेः शालभंजिका ॥
इयमस्तीति संशय्य विब्वोकैरवबुध्यसे ॥ ९४ ॥

विहारवाप्यां विहरत् पुण्डरीकं प्रतीहितम् ॥
घ्राणप्रेयो यदुल्लासि त्वन्नेत्र सदृशं भवेत् ॥ ९५ ॥

अपाररससम्भाराः सततोद्भावितान्तराः ॥
नार्यो नद्योऽनवद्यांगि दुर्विदप्रभवा खलु ॥ ९६ ॥

राजानोऽप्यन्धयश्चापि भवन्त्येव तथा प्रभो ॥
नोचेत्स्युः पतयस्तासां वाहिनीनां च ते कथम् ॥ ९७ ॥

---

1—Mss. 1, 2 (तज्जन्यं)
2—Mss. 1, 2, (तस्यास्तेनाङ्गरागेणावश्यं ते नायकात्मनि)
3—Mss. 1, 2 (विलसज्जानू)
4—Mss. 1, 2 (वपुषो)

विधिना निर्मिता नैव तन्वङ्गी सदृशी तव ॥
यदि स्यादुपलभ्येत क्वचित्काप्यम्बुजानने ॥ ९८ ॥

एक एवास्ति वंशेऽस्मिन् किंवदन्तीह भूतले ॥
रघोस्सार्वजनीनेऽस्मिन् किंवदन्तीह भूतले ॥ ९९ ॥

ययास्यकारितापूर्वा संगतिः कथमप्यनु ॥
ताभ्यां निवर्तयत्यास्यमपराकृष्टमानसः ॥ १०० ॥

विकसन्त्यां सरोजिन्यां सत्यामंके मधुव्रतः ॥
कैरविण्यलि संसर्गात् संकुचंत्या किमेतथा[1] ॥ १०१ ॥

मुक्तानां शिशिरीभावस्तद्विभाव[illegible] कोविद ॥
अनुमापयतीत्येष कालः परिनिर्णंसति ॥ १०२ ॥

शीतलत्वात्समीरस्य ममाप्यम्भोजलोचने ॥
यियासतीत्वनुमितिर्निशाप्येषाभिसारिका ॥ १०३ ॥

हितेनाकारपूर्वेण सम्मुखेनापि तेन वा ॥
दुर्विभाव्योस्तु[2] कालेऽयं समयस्यास्य सम्भवः ॥ १०४ ॥

अन्योऽन्यमेवं निर्णर्य्य साभिप्रायमुपस्थितम् ॥
तावुभौ गुरुणादिष्टौ चिंतयामासतुस्ततः ॥ १०५ ॥

गतोऽद्यावधि कालोऽयमावाभ्यां विमलाशये ॥
नानुभूतं त्वदुद्भूतसुतस्पर्शसुखं मनाक् ॥ १०६ ॥

---

1—Msss. 1, 2 (किमेतया)

2—Mss. 1, 2 (दुर्विभाव्योऽति)

सप्रकाशौ सदाचारैरप्रजत्वतमोवृतौ ॥
आवां यथा प्रदीपस्य पुरोभागापराश्रयौ ॥ १०७ ॥

अतोऽद्यगुरुराहूतः पुत्रेष्टिविधये मया ॥
समयोऽभूत् भाविज्ञः कुर्यां तेऽभिमतापि चेत् ॥ १०८ ॥

एतदर्थो हि सम्बन्धो नो प्रभो नान्यकर्मणे ॥
सर्वंनावेतदर्थं हि गार्हस्थममुनैव हि ॥ १०९ ॥

विधेयमेव तत्कर्म येन स्युर्नः सुपुम्प्रजाः ॥
तस्यामित्युक्तवत्यां स भाण्डागारे ययौ तया ॥ १५० ॥

वस्तुविशेषं वीक्ष्य वरं तत्र तदुक्तं तं हृदयम् ॥
प्रापतुः दम्पत्योः प्रमुदं सर्वमनुष्टुप्सर्गपदम् ॥ १११ ॥

अस्ति निशाप्यधुना स्वभुजे[1] गच्छत्वरयैवनिजे ॥
ममापि पश्य पुरा बलजे गत्यधरीकृतमत्तगजे ॥ ११२ ॥

आसतुरंवदनेक[2] विधे तौ तदुपेत्य ततः सविधेः ॥
ऊचतुरथ कृपेति विधेर्यत्स्मरणं पुनरिष्टिविधेः ॥ ११३ ॥

एककृतिप्रतियोगभिदा भावजुषौ नियतं हि तदा ॥
तौ तु परस्परतोऽभवतां भ्रांतिरियं पृथगित्यवताम् ॥ ११४ ॥

तत्समयोचितमात्मभवं शक्तितयाप्यनुभूतसुखम् ॥
तौ वुवुधात उभौ विधये चक्रतुराशु नमो विधये ॥ ११५ ॥

---

1—Mss. 1, 2 (सुभुजे)

2—Mss. 1, 2 (दुरूहः पाठः)

श्रीशध्यानपुरुक्तिराजमहिषीसाकूतसूक्त्युल्लसद्-
दुर्गादत्तसुशर्मपानकवरीपुत्रस्य तीर्थे कुरोः ॥
सर्गः श्रीरणवीरसिंहविभुनादिष्टस्य संवासिन-
श्चण्डीदासकवेः कृतावुपगतः सम्पूर्तिमाद्यो मुदा ॥ ११६ ॥

———

श्रीमन्महाराजाधिराज- जम्बू-काश्मीराद्यनेकदेशाधीश
श्रीरणवीरसिंहवर्मादिष्ट-कुरुक्षेत्र-मध्यरेखाँतर्गत-
पुण्डरीकपुरप्रसिद्ध - सवालवंशावतंस
श्रीदुर्गादत्तात्मजनव्यचण्डीदासकविकृतौ
रघुनाथगुणोदये महाकाव्ये
मङ्गलाचरणपुरीवर्णनराजमहिषीसाकूतसूक्तिवर्णनो नाम
प्रथमः सर्गः ।

ॐ

श्री रघुनाथगुणोदय- महाकाव्ये

# द्वितीयः सर्गः

अथ सत्वरमौषसीं विधिं सुविधायोत्तरकोशलेश्वरः ॥
सचिवैः समलंकृतो मुदा सविदा तेन समासदत्सदः ॥ १ ॥

स कृतानतिराश्रितासनाऽनुमतस्तेन तदा तदाज्ञया ॥
शुशुभे सहितो विपश्चिताऽवसरे विश्वसृजेव वासबः ॥ २ ॥

विदिताखिलयज्ञपद्धतेरिति तस्याभिमुखीभवन्नृपः ॥
निजगाद ततो गिरं गुरोः सुमुहूर्ते सुविमृशाशु[1] तद्विधिम् ॥ ३ ॥

---

1—Mss. 1, 2 (सुविमृश्य)

सुनिगद्यवचो नराधिपे सति तूष्णीं तदवोचदर्थवित् ॥
अधुनैव विधीयतामिति स वसंतः कुरुतेऽपि सन्निधिम् ॥ ४ ॥

वदतीति मुनौ मनीषिणामपि मान्ये मुदितो महीपतिः ॥
नयनेन शनैः समुल्लसज्जलजाग्रेण सुमन्त्रमैक्षत ॥ ५ ॥

जगतीतल रक्षकेङ्गिता कृतिवित्सप्रणयः प्रियम्वदः ॥
वदतिस्म सुसंस्मरन् गिरं श्रुतपूर्वां स सनत्कुमारतः ॥ ६ ॥

प्रभुणापि समीक्ष्यकारिणा गुरुणा निश्चितभूतभाविना ॥
क्षमणीयमिदं वचो मम शिशुरंकेऽपि न किं प्रजल्पति ॥ ७ ॥

युग्मम् :—

श्रुतपूर्वमिदं प्रभो मया सदसि क्वापि सनत्कुमारतः ॥
तनयो हि विभाण्डकस्य चेदमुमिष्टावतया[1] यजिष्यति ॥ ८ ॥

त्वयि साक्षिणि तच्चतुर्विदि तनयानां तरला चतुष्टयी ॥
चतुरास्य तदैव भूपतेः समुदं चञ्चलता भविष्यति ॥ ९ ॥

करणीयमिदं तथादरादुभयस्मै यदि रोचतेतराम् ॥
ब्रुवते हि हितैषिणः प्रभोः सदपृष्टा अपि नीतिकोविदः ॥ १० ॥

तदिदं स्मृतिमेति मेऽपि तद्वितथं नैव महर्षिरब्रवीत् ॥
इति चायमिति क्षितिक्षितां ननुमूर्तो नृपमन्त्र एव हि ॥ ११ ॥

सरसं ब्रुवतीति भूसुरे सति तस्मिन्निगमार्थवित्तमे ॥
क्षितिपोऽपि च वाढमुक्तवानिति सूक्तं क्रियतां तदेव हि ॥ १२ ॥

---

1—Mss. 1, 2 (मिष्टौ हि तया यजिष्यति)

कथयाशु स सुमन्त्रकुत्र स कथमत्रागमनं भवेद्वद ॥
इति तेन नराधिपेन स वदतोक्तस्तरसा विमृश्यताम् ॥ १३ ॥

तमुवाच रोमपादभूपति गेहेऽस्ति स शान्तया सह ॥
स नृपतिं तमिहानयाध्वरे सहितं पाणिगृहीतया तया ॥ १४ ॥

अवितर्क्यमिदं किमुत्तरैः सुवचो[1]ऽलंकरणाय सुभ्रुवाम् ॥
अनुकञ्चुकिकाममादिशत्तदनुस्वांश्चतुरंगिणीपतीन् ॥ १५ ॥

अवरोधवृताऽवनीभृता सवलस्तेनतया समन्वितम् ॥
चकमेऽनुमतो मनस्विना स तमानेतुमुदार वर्चसाम् ॥ १६ ॥

पृथगाश्रितगोपुरात्पुरान्निरयुस्तद्ध्वजिनी पुरा प्रजाः ॥
अभिलक्ष्य समुद्रतत्पुरा सरिदो[1]द्यानगतो यथोत्पुरात् ॥ १७ ॥

शुभयुक्तियुताः सदुर्मिभिर्विशदावर्तविरोचमानकाः ॥
तुरगा वसुधां वभुस्तदा [2]त्तिरयन्तः पतयोऽम्भसामिव ॥ १८ ॥

युग्मम् :

प्रधनोत्तरधेयभावना विलसन्तीः सविधाः पृथक् पृथक् ॥
परिचेतुमुदात्तचेतनो भुविधाराः परिसज्जितं पथि ॥ १९ ॥

मुखसिद्धमुपाध्वसंमतोद्दढवल्गाखिलभेदभावनः ॥
नववीथिषु कश्चिदश्वगो गमयामास हयं तदाश्रमम् ॥ २० ॥

---

1—Mss. 1, 2 (सरिदुद्यान)

2—Mss. 1, 2 (तिरयन्तः)

## राजयात्रा वर्णनम् :

भुवमार्यहलं हयोत्तमाः सरया लङ्घितुमश्वसादिभिः ।।
त्वरया ननु संगमस्खलत् सुखलीनं वलयाम्बभूविरे ।। २१ ।।

यतरश्मिशिरोधिकुञ्चनोन्नतिनीतांसयुगैस्तुरङ्गमैः ।।
अपि हस्तिनखादशंकितैः समनीयन्त रथाः शनैः शनैः ।। २२ ।।

विदधत् पुरुतो[1]ग्रजन्मना श्रुतिजाताः श्रुतिगोचराः गिरः ।।
गुरूणां कृतं मंगलोल्लसत् स ततः स्यन्दनमास्थितो ययौ ।। २३ ।।

शफजेनविनीतवाजिनां रजसा स्पृष्टतदांशुकश्रियः ।।
सुखसिद्धिकरो ववौ वहन्पथि तस्याप्यनिलोऽनुकूलताम् ।। २४ ।।

## अथ विशेषकम् :

विविधात्मसमुद्भवा स्थितिकलनाकाम्यकलापि सोऽग्रतः ।।
अवतारमिवाद्यमैश्वरं सदसज्जालमरालसंश्रयम् ।। २५ ।।

स्थिरजंगमभावभासुरं स्थललीलाचरणेषु पुण्यवत् ।।
मधुलिप्स[2]मरन्दसन्नमन्नववल्लीस्तवक व्रजांचितम् ।। २६ ।।

प्रतिदिग्विहरद्विहंगमं प्रभव[3]च्चारुकुरंगसंगमम् ।।
नगराजिविराजितान्तरं सततोदंचि ददर्श काननम् ।। २७ ।।

---

1—Mss. 1, 2 (पुरतो)

2—Mss. 1 लिपिकारस्यापरः पाठ इत्थम्—(V) मधुलिप्सुमरंद सन्नववल्ली... । )

3—Mss. 2 Mss. 1, प्रभुवच्चारु

उपयाति महीपतौ पुरः शुशुभे सा सुतरां स्वनायके ॥
ललनेवकृतप्रसाधना धृतपुष्पाभरणा वनस्थली ॥ २८ ॥

भ्रमिताभिसुफेनसुस्मिताः कमलास्याः शफरीविलोचना ॥
कमठोरसिजाः कृताह्निकाः अतितीर्षत्स सरितः पुरा पथि ॥ २९ ॥

अपि वेद सुवीक्षितं गतेः कुटिलत्वं न ससाधनोऽपि सः ॥
तदवैतु महोन्नतभ्रुवामिव तासामपरस्तु कः क्षमः ॥ ३० ॥

तमियाय यियासुमुत्थितं तरणीपारतटीं प्रणोदिता ॥
सहसा विदुषाविटेनया तरसा नर्मसखीव [1]नाविकेन ॥ ३१ ॥

स विलंघ्य ततः सरिद्वराः सुखमर्च्यानुपदं द्विजाशिषः ॥
पथि घोषधृतानि दापयन् प्रतिगृह्णन्नृपसीम्नि चाविशत् ॥ ३२ ॥

विदितं सुजवाश्वसाधनं त्वरितं तेन ततोऽनुद्यावितम् ॥
विहितानतियाष्टिकद्वयं नरनाथायतमाश्वजिज्ञपत ॥ ३३ ॥

अवगम्य वहिः पुरास्थितं ससखायं निजमद्य भूपतिः ॥
सचिवैः सह सेनया स्वयं त्वरयागात्तमभिप्रहर्षितः ॥ ३४ ॥

चलतोऽस्य पुरा स वाहिनेः समुदस्तस्य ततोऽभिगच्छतः ॥
पृतने चलते अशोभतां चलपूर्वापरतोयधिपती ॥ ३५ ॥

उपसंगतयोरनीकयोः शुशुभाते किल तौ महीपती ॥
उदितौनुतयोरुदन्वतोः हिमरश्मीव समुन्नताननौ ॥ ३६ ॥

---

1—Mss. 1, 2 (नर्मसखीव सा मता)

स च सोऽगपतिः प्रविष्य तद्विदितोदन्त उदात्तधीरुभौ ॥
तमृषिं समुपेत्य शान्तया सहितं शान्तधियं प्रणेमतुः ॥ ३८ ॥

इदमाह स तं रघूद्वहो मुनिना[1] सत्कृतयोस्तयोरयम् ॥
त्वरयोपगमस्त्वदन्तिके तनयेष्टिं भवतो विधित्सया ॥ ३९ ॥

स तमोमिति चोक्तवान् मुनिः कुरुसंभारमुदारमाचिरम् ॥
समयोऽप्युपवर्तते विधिं सुविधास्यामि हि गच्छ सत्वरम् ॥ ४० ॥

स तथेति विबुद्धसन्मनाः प्रतिसंश्रुत्य सहैव शांतया ॥
उपवेश्य रथेतमाययौ सखिना तेन त्वरयेण कोशलाम् ॥ ४१ ॥

गुरुणा स तदा प्रवेशितो विधिना सर्षिरुपेत्य सादरम् ॥
सुधियाभिहितो निजासने विहितस्वस्त्ययनो निषेदिवान् ॥ ४२ ॥

स तु तत्क्षणमेव भूपतिः समुपस्पृश्य गुरोः पदाम्बुजम् ॥
अपि तस्य विधानविज्ञयोर्विधयेऽभ्यर्थनमाकरोत्तयोः ॥ ४३ ॥

अवबुध्य तदर्थनामुभौ भृतसंभारमनेहसं च तौ ॥
तमबोधयतामरं विभुं नववार्ताकरणाय तद्विधेः ॥ ४३ ॥

स तदर्हंमहार्हकान्तिसन्नवनानाकरणैरलंकृताम् ॥
सरयूतटिनीतटांतिकोद्भवितां तौ सुकृतामदर्शयत् ॥ ४४ ॥

कृतमंगलमार्षमानितो नृपतिं तत्रशुभेऽन्हितेनयुक् ॥
निगमध्वनिनाग्रजन्मना सहपत्नीभिरवीविशन्मुनिः ॥ ४५ ॥

---

1—**Mss. 2.** "मुनिना सत्कृसतोः योस्तयोः" पाठः अशुद्धः Mss. 1 शुद्धः पाठः गृहीतः ।

द्युषदोऽपितदन्तरे बुधाश्चकिता रावणरोषवन्हितः ॥
तटमापुरजाग्रयायिनो गहनाग्नेरिव पक्षिणां गणाः ॥४६॥

समितावतयावदम्बु[1]धिबुबुधे तत्स्वयमादिपूरुषः ॥
समनन्तरवाञ्छितेक्षणं ननु लब्धव्यपदार्थसिद्धये ॥४७॥

समुदो[2]ज्वलयाऽजितस्य ते विजितोषः कचदम्बुजश्रियः ॥
सदृशापरिशान्तचेतसस्तमनुस्तोतुमथोपचक्रमुः ॥४८॥

निजभक्त भयाधिनाशिने सकलव्याधिविनाशकारिणे ॥
मधुजित् सुमते नमोऽस्तु तेऽनुविधेहि प्रचुरश्रियः शिवम् ॥४९॥

जलमेकरसं यथैकमप्यनुदेशं लभते रसान्तरम् ॥
त्रिगुणेषु तथा त्वमेककोऽनुगुणं रूपमुपैष्यविक्रयः ॥५०॥

मुदितोऽथ तयान्ववोचत त्रिदशायातसमीहते वधम् ॥
अचिरात्सममैव च क्रतौ भजतो राम इति प्रियाभिधाम् ॥५१॥

अवरिष्ट सदैव सर्गतस्तपसा तुष्टविधेरवध्यताम् ॥
मनुजास्तु निजस्य रक्षसामशनन्तैरलमित्यनास्थया ॥५२॥

स्वकरेण शिरांसि तेन[3] वै नवच्छिन्नानि निजासिनार्चने ॥
दशमं यदनेन कृन्तितं न हि लव्योंश इवास्य मेऽरिणः ॥५३॥

---

1—Mss 1, 2 (समये स तदाम्बुधिगतो)

2—Mss 1, 2 (समुदोज्वलया श्रिया समम्)
(समदोज्वलयाश्रिया समम्)

3—Mss. 1, (तेन वै) 3—Mss. 2 (बम्योंश)

अहमेमि चतुर्विधोऽभवन्नृपजायातृतीयाऽधुनैव हि ॥
यजतां परमान्नसैतवादित[1] पूयन्तुकुलं हि नौकसाम् ॥५४॥

अभिवर्ष्यनितान्ततान्तकं दशकावग्रहतो वचोऽमृतैः ॥
सुरसस्यमरन्तिरोदधे नवनीलाम्बुधयश्च ते ययुः ॥५५॥

परमान्नयुतां परः पुमान्नवयान्त्रो[2] रजताऽऽपिधानिकाम् ॥
कनकस्य निगृह्यवन्हितो यजमानोऽविरभूत्तदन्तरे ॥५६॥

स तदर्द्धमथार्द्धमस्य तत्पुनरर्द्धन्त्ववशिष्टमाशयत् ॥
तदुभे च सुमित्रिकां क्रमात् महतां धर्मविधौ न भेदधीः ॥५७॥

विधिना परिनिर्वृते क्रतौ सुमनास्तावभिकृत्य सोऽविशत् ॥
तिसृभिर्वृत्ताभिरन्वितः पुरिमूर्ताभिरिव त्रिशक्तिभिः ॥५८॥

नृपतिस्त्वथ शान्तया समं मुनिमापूज्य कृतेज्यमादरात् ॥
विविधाम्बरभूषणादिभिर्नृपतीनप्यपरान्व्यसर्पयत् ॥५९॥

मुकर[3] प्रतिमासु कुक्षिषु खलु तासा[4]मवसत्ततोऽक्षरः शुचिः ॥
शुचिभूमिजुषामनेकधा प्रतिमा चन्द्र इवान्तरेऽम्भसाम् ॥६०॥

परिदर्शित पाण्डुरश्रियोऽन्तरसत्वोदयिकास्तदाङ्गनाः ॥
सुरभावितकार्षसंपदः सुफलारम्भविशेषितावभुः ॥६१॥

---

1—Mss. 1, 2 (परमात्म कैतवान्ननु)

2—Mss. 1, 2 (मान्त्रीरजतपिधानिकाम्)

3—Mss. 1, 2 (मुकुर)

4—Mss. 1, 2 (तासामवलोक्यताकृतीः)

स्मितपूर्वरवं रहो मुखं श्रयतोस्मेरवचस्तदाननम् ॥
अमि[1]तस्य रराज तत्त्रयी निद्रामस्येव नव स्वरूपिणी ॥६२॥

नवदोहदलक्षणास्ततो दधतीस्तास्तरलाननद्युतीः ॥
समवाप समीक्ष्य सन्मुदं निजशक्तीरिवसोऽधिसंपदः ॥६३॥

उदयत्तदभूतपूर्वकं समकालोपगतं विलोक्य ताः ॥
किमितीति परस्परं दरादुदरं स्वं समदर्शयन्मुहुः ॥६४॥

सकला अपि ताः नतास्तदा रुचिरास्या अपरा इवाभवन् ॥
परमातिविलक्षणास्त्वभूदपि तत्रावरकोशलोद्भवा ॥६५॥

बहिरध्यवसायशक्तिकामिदमन्योन्यसखीजनस्तयोः ॥
नृपतेर्नवशक्तिकामिमामुभयोरन्तरगाममन्यत ॥६६॥

अपरेऽपि तु मानयन्तु मे हृदयं तत्र बबन्ध सोऽधिकम् ॥
परिभाति यथात्मनो रुचिः सुभविष्यत्त्विषि किन्तथा भवेत् ॥६७॥

समपृच्छदतस्तदाशयं प्रकटीभावपटीयसीं सखीम् ॥
रहसीति समीहतेतरां महीषी किं किमशेषवस्तुषु ॥६८॥

त्रिदिवेऽपि यत्तदीप्सितं भवेद्भुणतस्याः सुखसाध्यमेव हि ॥
तत् किमिदं नृपमामनुक्षणं मृदमाहर्तुं मुदीरतेऽसितम् ॥६९॥

सविमृश्य वचो नरेश्वरो मृदमेवात्यपहाय यत्परम् ॥
समया[2]दिति वस्तु भोक्ष्यते तनयोऽस्या भुवमब्धिमेखलाम् ॥७०॥

चपलायतचारुलोचना चतुराभ्यर्णमुपागते प्रिये ॥
कथमप्युदतिष्ठदासनादुदराभ्यन्तरलोकभृद्धृतेः ॥७१॥

---

1—Mss 1, 2 (अमितोऽस्य)

2—Mss. 1, 2—समवाविति पाठः

नवदोहदजातकार्श्यतातनुमध्यासुतनुः पुरैव हि ।
शयिता सविधे बभूव सागुरुवक्षोजयुगोपलक्षिता ॥७२॥

किमसावियमञ्जलिर्दृशोः किमु पारिप्लवतानुकारिणी ॥
अमितक्रमतोऽग्रकर्षकं सुहृदाकर्षणकामयन्त्रिका ॥७३॥

शुचिना शिशिरोपचारिणी युगपत्तेन कृशापि साभवत् ॥
रविचन्द्रकरैरुपाहितान्तर्तेजः शुचिनेव शर्वरी ॥७४॥

सुखकारणकात्तदाननं पुनरंगोपचयाद्व्यराजत ॥
क्रमतः सकलाभिवर्द्धनात् सितपक्षीयमिवेन्दुमण्डलम् ॥७५॥

अथ पुंसवनादिकाः क्रियाः स तु तत्तत्प्रणयानुरूपिणीः ॥
सुविधाय सुसूतिकागृहे सुमुहूर्त्ते सकलाः न्यवेशयत् ॥ ७६ ॥

समये परमोच्चगेषु सत्तनयं सापतमोपहं पुरा ॥
अथ पंचसु नक्तमभ्रगेष्व[1]तिगु ज्योतिरिवोन्महौषधिः ॥ ७७ ॥

निलयेऽधिकरोचिषा ततोऽधिगतेऽरिष्टशायिकाम् ॥
समशोभत तेन सा तदादितिरम्भोजदृशेव जिष्णुना ॥ ७८ ॥

शयितातिकृशोदरी बभावुपमं चायितमेत्य तं कृशा ॥
शरदावृतिभं सुरैः क्षिताम्बुजहारं सुरनिम्नगेव सा ॥७९॥

महसा कुलदीपकस्य तेऽवनिदीपाः[2] हतभाः सुभा अपि ॥
अभवन्नभितो विसारिणोदिततारादिव तस्य भास्वतः ॥८०॥

मगनेन मनांसि वासनाः सममाशाभिरभुः पयोम्बुजैः[3] ॥
सकलं शुभमेव तत्क्षणं महतां जन्मजगद्धिताय हि ॥८१॥

---

1—Mss. 1. (अकिरज्ज्योतिः)

2—Mss 1, 2 (गृह्य दीपाः)

3—Mss 1, 2 (गगनं रुचिरं कृति दधत् सममाशाभिरशोभदम्बुदैः)

हुतभुग्गतधूमविभ्रमोऽप्यनुकूलाचरणः समीरणः ॥
रविरुज्ज्वलभोऽस्तयार्दितायतमुक्ता इव भूमिपाः बभुः ॥८२॥

पुरुषादचिरश्रियस्तदा विनिपेतुः पृथुला श्रियो भुवि ॥
दशकन्धरमौलिविच्युतहरमुक्ताफलजालकैतवात् ॥८३॥

निपपात सुवृष्टिरङ्गणे नवमन्दारमयी महीभृतः ॥
मुदितामरकारिता तदा परिघातस्तु दशाननालये ॥८४॥

दितिजाङ्गन गण्डमण्डलोद्विलसन्मण्डनखण्डने पटोः ॥
प्रभवेऽस्य परस्य शङ्कया ननु लंकाम्बुधिमध्यगाभवत् ॥८५॥

विकटा गुणकूटकोटिषु स्ववधूटीर्भटकोटिदुर्घटाः ॥
परिविभ्यदिवाधिकादतः सविदारोहयदरूपेश्वरः ॥८६॥

नृपसद्मनि या निपेतुषी सुरकन्याकरपल्लवच्युता ॥
सुमन[1]स्ततिरादिरेव सावतरीतिःशिवसंभृतेरभूत् ॥८७॥

सुतजन्मनि वाद्यमण्डलप्रकरे पूर्वमुपाक्रमं पथि ॥
सुखिनां श्रवणप्रियध्वनौ नृपतो[2] दुंदुभयो दिवस्पतेः ॥८८॥

तदनन्तरमात्मजन्तु सा सुषुवे केकयभूमिपात्मजा ॥
शुभलक्षणमम्बुजेक्षणं सुशचीवोषसिपाकशासनिम् ॥८९॥

समलंकृतवान्निजायतद्युतिरागेण तदैव मातरम् ॥
परमभ्यसनेन तत्वविन्नयविद्यामिव साधु साधिताम् ॥९०॥

---

1—Mss. 1, 2 (सुमनस्ततिरादरप्रदा ननु देवैर्विहिता नृपालये)

2—Mss. 2 नृपतेर्दुंदुभयो इति पाठः

असविष्ट सुतौ सुमित्रिका युगपद्द्वावतिसुन्दराकृती ॥
जननी रुचिरागवर्द्धिनौ शशिभासाविव शुक्ल[1]सन्धिका ॥९१॥

सविशेषमशेषसंपदा विलसद्बन्धुरवेशभृज्जनम् ॥
जनतालममंस्तवीक्ष्य तत्तमनुस्वर्गमिवागतं भुवि ॥९२॥

तदुद्गतेनान्तरतो नरेशं विवक्तुकामेन किलानिदेशम् ॥
अधावि सख्यापि तत.[2] संदेशं तयोः सहानन्दथुः नात्तवे[3]शम् ॥९३॥

शुभवर्णविकाशिसुन्दरी समसर्गं श्रवणायभूपतिः ॥
सुचिराय समुत्सुकोऽन्तिके सरसोऽतिष्ठदनुक्षणं स्मरन् ॥९४॥

श्रीरामादिकजन्महेतुविलसत्तत्तज्जनुर्वर्णनो ,
दुर्गादत्तसुशर्मपानकवरीपुत्रस्य तीर्थे कुरोः ॥
सर्गः श्रीरणवीरसिंहविभुनादिष्टस्य संवासिन-
श्चण्डीदासकवेः कृतावुपगतः पूर्तिं द्वितीयोऽप्यलम् ॥९५॥

---

श्रीमन्महाराजाधिराज- जम्बू-काश्मीराद्यनेकदेशाधीश
श्रीरणवीरसिंहवर्मादिष्ट- श्रीकुरुक्षेत्र-मध्यरेखाँतर्गत-
पुण्डरीकपुरप्रसिद्ध - सवालवंशावतंस
श्रीदुर्गादत्तात्मजनव्यचण्डीदासकविकृतौ
रघुनाथगुणोदये महाकाव्ये
श्रीरामचन्द्रादिजन्मादि वर्णनोनाम
द्वितीयः सर्गः ।

---

1—Mss. 1, 2 संधियका इति पाठः (सन्धिका)

2—Mss. 1, 2 (सवेगं)

3—Mss. 1, 2 (रात्तवेशम्)

ॐ

श्री रघुनाथगुणोदय- महाकाव्ये

# तृतीयः सर्गः

निशम्य तस्याः सुतजन्म नूनं ,
विनैकबालव्यजनातपत्रैः ॥
अगोचरं मेरुद्भूद्विदित्सोः[1] ,
नृपस्य तस्याक्षिमनः श्रुतीनाम् ॥ १ ॥

समीक्ष्य साकेतपतिः सुतानाम् ,
मुखानि लोकोत्तरकान्तिभांजि ॥
जहर्ष चिंतामणिपूरिताना ,
मिवाधनःकांचनकुम्भकानांम् ॥ २ ॥

सुजातकर्माणि विधाय तेषा -
मुपस्थिते तानभियोक्तकामे ॥
सदाशिषाग्रे तदनु द्विजेन्द्रे ,
विरेजिरे ते स्तनपायिनोऽपि ॥ ३ ॥

---

1—Mss. 1, 2 (अगोचरं सर्वमभूद्विदित्सोः)

परैव तेषां कृतसंस्कृतीनाम्,
चमत्कृतिश्चारुतरोल्ललास ।।
सुशाणवत्पुरकाल एव,
यथा मणीनां पृथगाकृतीनाम् ।। ४ ।।

विनिश्चितेप्यात्मनि दुर्जनस्य,
सदात्मचक्रे [1]सुतरामभावे ।।
विमुच्यतामेवमुदारहर्षाद्,
वदन् स पैत्र्यान्मुमुचे हि वन्धात् ।। ५ ।।

विलोक्य कामं सकलाभिरामम्,
वपुर्गुरुराम इदं नु तस्य ।।
तदग्रजस्यापि तु नाम चक्रे,
सर्वात्मनां संरमणाश्रयं तत् ।। ६ ।।

स कैकयीजातमथो मुनीन्द्र-
श्चकार नाम्ना भरतं ततोऽन्यम् ।।
सुलक्षणैर्लक्ष्मणमित्युवाच-
परं च शत्रुघ्नमुदागमज्ञः ।। ७ ।।

कृताभिधेयाः गुरुणा कुमाराः,
कुमारकल्पाः कमनीयभासाः ।।
समुद्यताः वर्द्धिषताग्रजेन,
समं परानन्दयुतेव[2] पित्रोः ।। ८ ।।

---

1—Mss. 1 सुतरामभा इति पाठः अशुद्धः ।

2—Mss. 1, 2 (युताः स्वपित्रोः)

इतस्ततस्ते भुवि रिंगमाणाः,
विधूसरांगा सरसं हसन्तः ॥
सहैव सर्वार्हितमैन्द्रियार्थै -
र्नराधिनाथस्य हृदाऽऽचकर्षुः ॥ ९ ॥

निसर्गतो निर्मलचारुचित्ताः,
प्रकाशयामासुरलं समेताः ॥
कुलं रघोरत्यनवद्यमुद्यत् -
त्रिविष्टपोद्यानविवार्तवस्ते ॥ १० ॥

समेऽपि तेषां सहजानुरागैः,
त्वलंभि सौभ्रात्रमलं चतुर्भिः ॥
युगीभवद्भिः प्रचुरानुरागैः,
समुल्लसत्प्रोष्ठपदोपमानम् ॥ ११ ॥

द्वयोर्द्वयोरप्युपचीयमानम्[1] ,
कदापि हार्दं विभिदे न तेषाम् ॥
परस्परेणानिलहव्यवाहो -
र्यथा यथा चन्द्रसमुद्रयोश्च ॥ १२ ॥

प्रजेश्वरास्ते सरसा प्रजानाम्,
मनो विजह्रुर्महसा रसेन ॥
शुचिव्यपायै दिवसा इवोद्यत्,
कान्तच्छविश्यामलवारिवाहाः ॥ १३ ॥

---

1—Mss. 1 द्वयो द्वयो इति पाठः ।

चतुर्विधाः सप्रसवाः प्रशस्ताः,
व्यस्ताः वभुः तस्य धराधिपस्य ॥
धर्मादिकानां सकलास्तुर्णा -
मुपात्तसन्मूर्तिरिवावताराः ॥ १४ ॥

यथोपमात्रा कथितं वचस्ते,
समूचुरालंब्य ययुस्तदीयाः ॥
करांगुलीर्नेमुरुपात्तशिक्षा -
स्तेनुर्मुदं तेन पितुश्च डिंभाः ॥ १५ ॥

स कीदृशो यस्य शशी प्रसूनम्,
सरद्रुमो यत्कलिकाश्च ताराः ॥
द्युवल्लरी कीदृगसौ च येषाम्,
फलानि मुक्तास्तरवोऽपि के ते ॥ १६ ॥

गुणैरनूनैर्गुरुवत्सलास्ते,
तमुद्गृणन्तश्चतुरंतिकेशम् ॥
अतूतुषत्तं तरलायताक्षाः,
प्रशस्तरत्नैरिव वाहिनीशाः ॥ १७ ॥

सुबृत्तचूडाश्चलकाकपक्षा -
अमात्यपुत्रैः सहिता वयस्यैः ॥
न यान् समीयुर्लिपिसंग्रहेण,
यथा प्रवाहेण नदी नदीनाम् ॥ १८ ॥

अथोपवीतान्विधिनालमेनान्,
समाशिषस्तेषु सुसिद्धयत्ना ॥
वभुस्त्वशेषा गुरवो विशेषा,
क्रिया हि सद्वस्तुनि सिद्धिमेति ॥ १९ ॥

उपात्तविद्याविनयोपपन्ना ,
नृपोपसन्नागुणगौरवेण ॥
मनोहरन्तः प्रकृतिं प्रजानाम् ,
बभूवुरासेचनकाननाभाः ॥ २० ॥

प्रियंकरः पीतपटं वसानो ,
भुजंगामाजानुविलम्बिबाहुः ॥
ततज्य कोदण्डधरस्तु तेषाम् ,
बभूव रामोऽन्वयसिन्धुचन्द्रः ॥ २१ ॥

अधीतसम्पूर्णकलोऽधिकश्रीः ,
पितुः प्रकर्षादुपलब्धवर्णः ॥
इतोदयः शारदशीतरश्मि -
र्न कस्य रामो हृदयं जहार ॥ २२ ॥

अथावनीशोजितमीनकेतूँ ,
स्विषात्मनोऽवेक्ष्यसुहर्षिताङ्गान् ॥
विचिन्तयामास सुमन्त्रिमध्ये ,
पुरोधसादारविधिं स तेषाम् ॥ २३ ॥

यदा समुद्दिश्य पुरोधसं तान् ,
विवक्षति क्षोणीपतौ बहिस्थम् ॥
तदैव तस्य प्रतिहार [1]रक्षी ,
समागत्तं कौशिकमभ्यचष्ट ॥ २४ ॥

---

**1—Mss. 1** ('रक्षी' शब्दस्य द्विरावृत्तिः)

**2—Mss. 1** प्रहर्षेः

तत: स मन्त्री सपुर: पुरोधा: ,
सभावमाकर्ण्य कलं वचस्तत् ॥
तमभ्यगाज्जातमहाप्रहर्षो ,
जवेन वेदास्यमिवामरेश: ॥ २५ ॥

ततोऽर्धमीशाद्धरिणे गृहीत्वा ,
पुरस्कृतो गाधिसुतो नृपेण ॥
स तेन साकं मुनिना सदस्यै: ,
सभान्तरे सत्वरमाविवेश ॥ २६ ॥

यथार्हतस्तेषु वरासनेषु ,
स्थितेषु सानन्दमनास्तपस्वी ॥
तदागमोद्भूतगुरुप्रहर्षम् ,
तमासितं शर्म समर्प्य पृच्छत ॥ २७ ॥

पुरेषु कोशे विषयेषु हृत्सु ,
स बान्धवेषूग्रतरप्रभाव: ॥
अनामयं ते वरिवर्ति राजँ -
स्ततस्तमा[1]चष्ट मुनि: प्रहृष्ट: ॥ २८ ॥

समानदारेषु यथाप्रजस्य ,
सुपुत्रजन्माऽऽनुदकेऽधिवर्षम् ॥
यथा[2] यतिर्नष्टविधेस्तथैव ,
तवागमं स्वागतमस्तु मन्ये ॥ २९ ॥

---

1—Mss. 1 तमाचचष्ट

2—Mss. यथामति:

मुनेऽस्ति सर्वत्र महानुभावे-
ऽनुगृहीतस्य भवाद्दशैर्मे ॥
तदित्युवाच प्रतिपूजयँस्तम् ,
तपोधनं सम्प्रति भानुमन्तम् ॥ ३० ॥

अवैम्यहं नूतनसृष्टिकर्तुम् ,
समर्थमप्यागमनं तवैतत् ॥
निरोधयत्यात्मनि मां महर्षे !
करोमि किं ते वद भूरिकामम् ॥ ३१ ॥

यतोऽहमद्राक्षमुरुद्विजेन्द्रम् ,
क्षपेयमासीन्मम सुप्रभाता ॥
सराजविप्रर्षिपदाश्रयेण ,
त्वया त[1] एवाद्य कृतार्थितोऽहम् ॥ ३२ ॥

विलोकनं यद् भवतामकस्मात् ,
कृतं मया प्राक्तनपुण्यपुञ्जैः ॥
हरन्निदं तत्क्षणमेव पापम् ,
विभावयत्यात्मनि भावितव्यम् ॥ ३३ ॥

विधेयमस्मै रघूवंशजाय ,
विधिज्ञ मे ब्रूहि यदप्यसाध्यम् ॥
परैः परत्रात्र च तन्मदीयैः ,
शरैरशेषेण कृतं नु विद्धि ॥ ३४ ॥

---

1Mss. 1, 2 (स एवाद्य)

इति प्रगल्भां गिरमीश्वरस्य ,
भुवो भवित्रीं विनयप्रधानम् ॥
प्रसिद्धकीर्तिर्निशमय्य भूयो ,
विवक्तुमर्थ्यामुपचक्रमे सः ॥ ३५ ॥

तवानुरूपं हि न मे परस्य ,
विभो विशिष्टव्यपदेश भाजः ॥
कुले प्रसूतस्य[1] मनोर्मनःस्थम् ,
विमृश्य यत्तद्भवसत्यसंधः ॥ ३६ ॥

यदर्थमत्रागतश्चास्थितोऽस्मि ,
व्रतं तदिष्टेः खलु विघ्नरूपम् ॥
स बाहूमारीचयुगं प्रसिद्धम् ,
विधूतये तस्य च देहि रामम् ॥ ३७ ॥

तयोरजस्रं प्रतियज्ञमुग्रै -
रुपप्लवैस्त्याजित एष देशः ॥
प्रभावतो हंसि न चेत् कुतोऽसौ ,
तथा सभावो नहि यत्र शापः ॥ ३८ ॥

स एष रामः क्षितिपाल संज्ञ -
स्तमीतमो रात्रिचरेण कालः ॥
यथा हरिः सत्वमरीचिमालः ,
समोहितद्वैपकरालभालः ॥ ३९ ॥

---

1—Mss. 1. कुले प्रसूतमनःसंत:

अपि प्रियं हृद्यमथोऽनवद्यम्,
वचो मुनींद्रेण समीरितं यत् ॥
तथापि तस्यात्मनि वज्रकल्पम्,
बभूव रामार्थं[1] न कोटिकूटम् ॥ ४० ॥

ततः स शापोद्भवभीतिताम्य -
न्निरुध्य चेतोऽथ चिरं नरेन्द्रः ॥
तदास्य शीतांशुचकोरनेत्रो -
धृताञ्जलिस्तं पुनराचचक्षे ॥ ४१ ॥

मुनेर्कुमारस्तव दास एषः,
कदाहऽ[2]प्यदृष्टाहवतद्विशेषः ॥
व्रजाम्यहं स्याद्यदि ते निदेशः,
सवाहिनिः संयुगसिद्धिवेशः ॥ ४२ ॥

जगत्त्रयासादियशोऽभिलाषी,
विशाम्पतेभूमितले यदि त्वम् ॥
विशिष्टमापृच्छ्विदोऽपि चान्यान्,
विसर्जयस्वाशु मया सहैनम् ॥ ४३ ॥

मया सुगुप्तं कुशिकात्मजेन,
सुरासुराक्ष[3]कोटयोऽपि ॥
विलोकितं क्रूर[4]दृशा न शक्ताः,
कृतं कुमारं तु विकत्थनेन ॥ ४४ ॥

---

1—Mss. 1, 2 (रामाय)

2—Mss. 1, 2 (कदाप्यदृष्टाहवः...)

3—Mss. 2. (सुरासुराराक्षस—)

4—Mss. 1, 2 (क्रूर)

वदन्तमेवं प्रतिभासयन्तम् ,
स्वतेजसोंऽशुमिव स्वमात्याम् ॥
समन्युमालोक्य तमग्रजन्मा ,
जनेङ्गिताकारविदोऽभ्यवादीत् ॥ ४५ ॥

न सांप्रतं रामनिरोधनं ते ,
नृपाधुनेक्ष्वाकुकुलोद्भवस्य ॥
यतोऽमुनागुप्तमिवामृतं ते -
ऽनलेन शक्ष्यन्ति विघर्षितं के ॥ ४६ ॥

असौ वपुष्मान्नृपतेऽस्ति धर्म -
श्चराचरे वीर्यवतां वरिष्ठः ॥
स वेत्ति सर्वास्त्रगणं न चैनम् ,
विदन्ति वेत्स्यन्त्यपरे न चान्ये ॥ ४७ ॥

प्रयत्नतो लब्धमपि क्षितीशो ,
ददौ विशिष्टानुमतोऽध्वराय ॥
सलक्ष्मणं तं मुनयेऽन्वयेऽस्मिन् ,
गतो[1] न रिक्तो हि कदाचिदर्थी ॥ ४८ ॥

पुराध्वशुद्धौ स चकार याव -
त्तयोर्निदेशं गमनाय यावत् ॥
अकारि सा तु त्वरयाम्बुवाहै -
र्नवप्रसूनान्वितपुष्पवर्षैः ॥ ४९ ॥

---

1—Mss. 2 अन्तिमपंक्तेरभावः ।

विधातुमाज्ञां पितुरुद्यतौ तौ ,
प्रणेमतुस्तत्पदयोः प्रहर्षौ ॥
तयोर्निपेतुर्नतयोर्नृपस्य प्रवत् -
स्यतोः शीर्षणि चाश्रुवृन्दाः ॥ ५० ॥

सहाशिषानेत्रजवारिणौ तौ ,
पितुर्मनागुक्षितकाकपक्षौ ॥
जनेक्षणाध्वस्रजमीक्षमाणौ ,
तमन्वयातामृषिमात्तचापौ ॥ ५१ ॥

मणिप्रभाभिर्विलसन्कुलाया -
मनुव्रजन्तौ[1] मुनिमागमज्ञम् ॥
अजिह्रियेतां त्रिदिवेऽनुयातो -
रुचिं विरंचिं सुरवैधयोस्ते ॥ ५२ ॥

अनूभयासं स्थितचापबद्ध -
सबाणतूणीरयुगोपलक्ष्यौ ॥
अरोचिषातामुदिताग्रकायौ ,
पथि त्रिशीर्षाविव पन्नगेन्द्रौ ॥ ५३ ॥

सलक्ष्मणैकानुचरं तपस्वी ,
तमाश्रमं नेतुमुदैच्छदेकम् ॥
तदाशिषं संयुयुजे स ताभ्याम् ,
बलं तु तौ रक्षितुमक्षमं तत् ॥ ५४ ॥

---

1—Mss. 1, 2 वनुव्रजन्तौ

किरीटकोटिकटिबन्धधन्वा ,
कलापकल्पेषु मुहुः करस्य ॥
समर्प्पणं वर्ज्यमपि स्वभावत -
स्तयोः शिशुत्वादिभशावयोर्वा ॥ ५५ ॥

ददौ स षट्क्रोशमुपेत्य पूर्वम् ,
बलां तयोः सातिबलं वराय ॥
जयाश्रिया सार्द्ध[1]मुदस्त्रपाणाम् ,
प्रहर्षिर्णी भूमिसुतामिवर्षिः ॥ ५६ ॥

विदिद्यु ते सोऽधिकमाप्तविद्यो -
ऽनुजेन साकं सरयूतटान्ते ॥
स्वभासमुद्भासि निजोपलाभा[2] -
युतो दिवानाथ इवाम्बुदान्ते ॥ ५७ ॥

कृताह्निकौ तेन समं ततस्तौ ,
वनस्यतत्तद्वरभावजातम् ॥
परस्परस्मै परिवीक्षयन्तौ ,
प्रचेलतुर्वत्मनि[3] सद्मनीव ॥ ५८ ॥

तयोः प्रभावेण पदाक्रमन्तौ ,
न मम्लतुस्तौ विशदातपेऽपि ॥
पथि प्रतोल्यां परिधावमानौ ,
यथा जनन्योरुपलालनैन ॥ ५९ ॥

---

1—Mss. 1 जयश्रिया त्वार्द्धं इति पाठः ।

2—Mss. 1, 2 (द्युतो)

3—Mss. 1, 2 (वर्त्मनि)

सरांसि तौयैः सरसैः पयोजैः,
पतत्रिणः कर्णसुखैः विरावैः ॥
हृदि स्पृशो गन्धवहाः सुपैष्यैः,
सिसेविरे तौ प्रतिरूपयान्या ॥ ६० ॥

तदीक्षमाणं सरयूर्मिमालाः,
सलक्ष्मणं वाक्यमवोचदार्यः ॥
अभीनमाराधितुमस्ति रक्ता,
सतीव संध्याऽनुजपश्चिमेयम् ॥ ६१ ॥

समाप्य सायंतनकर्मसर्वम्,
प्रणम्य तं तस्य निदेशतस्तौ ॥
निषेदतुः सत्तृणबद्धतुल्य -
द्वये विनीताविव सिंहशावौ ॥ ६२ ॥

कृतानुमत्येव धरामवाग्रे,
श्रिया निदिष्टेव निशाचराणाम् ॥
उपोढमुत्कण्ठितया स्वपन्तम्,
विभावरी प्राप विभावरीव ॥ ६३ ॥

प्रतीयतेऽत्यर्थविलक्षणोऽयम्,
भवो भवार्तिप्रशमोपलाभात् ॥
समुचुरेवं जनतास्तदानी -
मुपेन्द्रवज्राञ्चितसर्गहेतुः ॥ ६४ ॥

तयोः करीन्द्राश्वरथ प्रयायिनोः,
पदाध्वचारस्य परिश्रमादिव ॥
स तस्थिवांस्तत्र तरंगिणीतटे,
तमालतालावलिरंजितोटजे ॥ ३५ ॥

भृदुतरनृणसंस्तरे क्रतौ तौ ,
ऋषिकथितेषु कथानके तु सख्युः ॥
निजपितुरतिरात्रमाशया ,
तां धनुरुदपानुदयौ विभावन्तौ[1] ॥ ६६ ॥

तत्तदसंस्कृतिगाधिजागमनतद्रामार्थनाद्युल्लसद् ,
दुर्गादत्तसुशर्मपानकवरीपुत्रस्य तीर्थे कुरौः ॥
सर्गः श्रीरणवीरसिंहविभुनादिष्टस्य सम्वासिन -
श्चण्डीदासकवेः कृतावुपगतः पूर्तिं तृतीयोऽध्ययम् ॥६७॥

---

1Mss. 1, 2 (विभावयन्तौ)

———

श्रीमन्महाराजाधिराज- जम्बू-काश्मीराद्यनेकदेशाधीश
श्रीरणवीरसिंहवर्मादिष्ट- श्रीकुरुक्षेत्र-मध्यरेखाँतर्गत-
पुण्डरीकपुरप्रसिद्ध - सवालवंशावतंस
श्रीदुर्गादत्तात्मजनव्यचण्डीदासकविकृतौ
रघुनाथगुणोदये महाकाव्ये
श्रीरामचन्द्रादिसंस्कारादि वर्णनोनाम
तृतीयः सर्गः ।

ॐ

श्री रघुनाथगुणोदय- महाकाव्ये

# चतुर्थः सर्गः

ततः प्रभाते विमले कृताह्निकौ ,
मुनिं पुरस्कृत्य समुस्थितौ[1] पुरः ॥
अपश्यतां पुण्यतमं तपस्विनाम् ,
घनं विशेषोपचितं जितात्मनाम् ॥ १ ॥

परस्परस्मै प्रतिपादचंक्रमम्[2] ,
परीक्षयन्तौ वनभावसम्पदः ॥
प्रचेलतुस्तस्य वनस्य वर्त्मनि ,
प्रकामतुष्टौ निजसद्मनीव तौ ॥ २ ॥

इमा हरिण्योऽजितबालवत्सला ,
विचेष्टमानान्पृथुकाननुस्थलम् ॥
अनुद्रवन्त्यः स्थगिता इवासिता ,
यथानुकूल्यं बत नः स्वमातरः[4] ॥ ३ ॥

---

1—Mss. (समं स्थितौ)

2—Mss. 1, 2 चक्रमम् इति पाठः ।

3—Mss. 1' 2 संवतनः इति पाठः ।

समाह्वयन्तीव सपक्षचारिणो,
विहर्तुमन्योन्यमलं विहारिण: ॥
पतत्त्रिपोता: कलकूजितैरिमे,
समुद्वयस्या[1] इव नोऽनुभूरुहम् ॥ ४ ॥

समेत्य मुस्ताक्षतिमर्भका अपि,
समा निरातङ्कमिमेऽत्र पोत्रिणाम् ॥
प्रकुर्वते कान्तकरानुपल्वलम्,
कुलोचितं कर्मविदा तु दुस्त्यजम् ॥ ५ ॥

इतस्ततोऽस्मिन्विपिने विपश्चिताम्[2],
परिभ्रमन्तोऽनुदिशं मतङ्गजा: ॥
महीमिमां क्लिन्नतमां प्रकुर्वते,
स्रवन्मदा: शीकरिणो घना इव ॥ ६ ॥

मृगारिरेषोऽतिवपुर्बलोत्कट:,
करीन्द्र सम्भावित भूविहारवान् ॥
विभाति मध्ये मृगराजमुच्चकै-
रुपेत्य सिंहासनमेकराडिव ॥ ७ ॥

असौ स्थितोंकेऽस्य सुतोऽधिसम्मितो,
निजस्य सम्भावयते मृगेशताम्[3] ॥
सुवृत्तशीलो नृपतेरिवात्मजो,
नराधिपत्यं युवराजसंज्ञित: ॥ ८ ॥

---

1—Mss. (समुत्पतन्तो विपिनेऽनुभूरुहम्)

2—Mss. 1, 2 विपश्चित: इति पांठ: ।



3—Mss. 1, 2 मृगेश माम् इति पाठ: ।

प्रकाशिताऽऽचित्रितबर्हवाससाम् ,
सतालषडजस्वरमूर्छनाभृताम् ॥
परिस्फुरचञ्चुविपश्चिकात्मनाम् ,
न रागिणामत्रभिदाकलापिनाम् ॥ ९ ॥

समीरसंयोजितपल्ल[1]वच्छला -
दिमेऽनुबद्धाञ्जलयो महीरुहाः ॥
द्विजा इवारिन्दमसूर्यवर्चसम् ,
ध्रुवं ससन्ध्यं मुनिमभ्युपस्थिताः ॥ १० ॥

इमानि किंजल्कसुवर्णमुद्रिका -
वरोपदालम्भिकरोम्बुजान्यभि ॥
सरांसि सामन्तकुलानि नौ पितुः ,
पथीव तिष्ठंत्युभयत्र नोऽध्वनः[2] ॥ ११ ॥

इतीरयन्तौ विविधा वनश्रियो ,
विलोक्य तं तौ मकरध्वजाश्रमम् ॥
कपालकीलालकरालमीयतु -
र्वनं ततो व्यालशृगालसेवितम् ॥ १२ ॥

शरासनं सज्यमुदारविक्रमो ,
जनस्य संचारविवर्जितेऽध्वनि ॥
विधाय वात्येन स तत्र राघव -
श्चकार टंकारमुदीरयन्दिशः ॥ १३ ॥

---

1—Mss. 1, 2 पलव इति पाठः ।

2—Mss. 2 नोऽध्वजः इति पाठः ।

निशम्य तं जातविशेषसम्भ्रमाः ,
किमाविनद्येत्य[1]भिशब्द सुद्रुताम् ॥
विलोक्य रामोऽखिललोकतत्ववि -
त्ससंशयं लक्ष्मणमभ्यभाषत ॥ १४ ॥

निशा किमेषानुज किं क्वचिद्ग्रहाः ,
घटाः [2]स्रपान्हन्तुमुपैति कालिका ॥
सनिश्चिकार्येति वितर्क्य ताटका ,
चलद्बलाकानृकपालमालिका ॥ १५ ॥

इति ब्रुवाणौ तदनन्तरक्षणे ,
पुरोधिवान्यामिव सम्प्रधावतीम् ॥
स्त्रियं तमन्योन्यमुखं सुविस्मितौ ,
निरीक्षमाणौ क्षणमभ्यतिष्ठताम् ॥ १६ ॥

समुच्छलद्बाहुतरङ्गदुस्तरा -
दुराशया दीर्घतराक्षिमत्स्यका ॥
तदा पतन्ती वबृधे ससम्भ्रमा -
द्दिनागमे भास्करकन्यकेव सा ॥ १७ ॥

रुरोध सा राममदभ्रतेजसम् ,
जवेन जंभात्मजितापि दुर्जया ॥
तनूलसत्प्रेतपटाधिनिःस्वना ,
श्मशानवात्येव सहस्रदीधितिः[3] ॥ १८ ॥

---

1—Mss. 1 त्यय शब्द इति पाठः ।

2—Mss. 1, 2 (सृगानुलिप्तेयमुपैति कालिका)

3—Mss. 1, 2 दीधितिम् इति पाठः ।

अनर्हमप्यस्ति निरर्हणं स्त्रिया -
स्तथापि सोऽधत्त शरासते शरम् ॥
महीभृतामित्यनुशासनं स्मरन् -
मृधे विनिघ्नन्सकलो[1]वधार्हणः ॥ १९ ॥

वितर्कयन्तीति पुरःस्थितापि सा,
न ताडयामास तमाशु राक्षसी ॥
असौ कदात्यायत कृष्टकार्मुको,
भवेन्मनोभूर्न मया विहन्यताम् ॥ २० ॥

पुरा कटाक्षायुध[2]विश्रुताऽबलाः,
किमेतदेषोर्ध्वभुजेति चिन्तयन् ॥
स राधवोऽपि क्षणमन्तरास्मितो -
ऽभ्यतिष्ठदीक्षुः प्रथमं ततो हतेः ॥ २१ ॥

पुनः प्रहर्तुं प्रसमीक्ष्य तां खलाम्,
समुद्यतां तेन विहन्यतामिति ॥
समीरितः स प्रमदावधे दयाम्।
शरेण साकं सहसा समत्यजम् ॥ २२ ॥

स रामकामाशुगपीठमर्दको,
हृदि प्रविश्यादरकर्मकोविदः ॥
क्षपाचरीं[3] तां रुधिरांगरागिणी -
मनीनयज्जीवितनाथमन्दिरम् ॥ २३ ॥

---

1—Mss. 1, 2 स लो वधार्हणः इति पाठः।

2—**Mss. 1, 2** विश्रुतावल्यः इति पाठः।

3—Mss. 1, 2 क्षपाचरो इति पाठः।

कलम्बविद्धाद्रिसमानतद्वपु -
निपातसंजातमहोप्रकम्पनम् ॥
तदुत्तरं यद्विपिने तदुल्वणम् ,
बभूव लंकेशपुरे पुरैव तत् ॥ २४ ॥

कृतान्तकामस्य नितान्तरोधना -
दचिन्तितं प्राप परप्रवेशनम् ॥
पतत्रिणाऽऽशाततदुर्गमाश्रितम् ,
कपाटमुद्घाटितमत्र[1]नक्षतम् ॥ २५ ॥

पुरा प्रसन्नो भगवान्सुदर्शनम् ,
कथञ्चिदेकं तपसा ददौ शिवः ॥
ततः स तस्मै सनिशाचरापहम् ,
सुचक्रजालं मुदितोऽवदात्ततः ॥ २६ ॥

ततोऽन्यदेयान्यपि यान्यमन्यत ,
पुरा स तस्मै सकलान्यदान्मुनिः ॥
[2]सदैशिकोऽस्त्रीणि निदेशकारिणे ,
ददाति शिष्याय हि गोप्यमप्यलम् ॥ २७ ॥

[3]समाश्रयन्नेव स वामनाश्रमम् ,
ततो जहर्षेत्यतिचित्रमत्र किम् ॥
पुराभवेऽभ्यस्ततमं यदात्मनो -
विनोदयत्येव हि वीक्ष्यतेऽपि तत् ॥ २८ ॥

---

1—Mss. 1, 2 (?)

2—Mss. 1, 2 तितिक्षवेऽस्त्राणि निदेशकारिणे (रामप्रतापोदय ४-५१)

3—Mss. 1, 2 "उपेयिवांश्चेष्टितमस्मरन्नपि पुराभवस्याति समुत्सुकोऽभवत्" (रा० प्र०४-५४)

गृहीतशिष्यापचितिः प्रयोगविद् -
विलोकमानोऽखिलयज्ञसंभृतिम् ॥
विवेश ताभ्यां सहितो निजाश्रमे,
पुनर्वसूभ्यामिव शर्वरीश्वरः ॥ २९ ॥

वर्तमानं समुनिं तदध्वरम्,
सतोन्तरायान्क्षितिपालनन्दनौ ॥
अरक्षतां तौ सकलम्बकार्मुकौ,
तदा प्रमत्तारिवधाय बिभ्रतौ ॥ ३० ॥

नृपात्मजौ तत्र शरासमण्डल,
द्वयोल्लसद्बाणगभस्तिभास्करौ ॥
अमानिषातां मुनिगुप्तये जनैः,
क्रमोदयं तौ रविरात्रिनाथकौ ॥ ३१ ॥

अवेक्ष्य वेदिं रुधिरप्रदूषिताम्,
मुनेः स तस्या नियतात्मनोऽम्बरे ॥
उदैक्षताल्पाभ्रमिवाग्रवायुना,
विशीर्यमाणं पिशिताशिनां बलम् ॥ ३२ ॥

स यावदन्यानपहाय तत्पतिम्,
हरिर्गजेन्द्रं कलभानिवाकरोत् ॥
शरस्य लक्ष्यं शरदम्बुवाहवत् -
स वीक्ष्माणोऽपि पुरास्तिरोदधे ॥ ३३ ॥

ततस्तमन्तर्हितमस्रपाधिपम्,
विहायसि स्वक्षिपथात्पलायिते[1] ॥
स धीरनादेन तिनादयन्दिशो,
विबोध्यमारीचमवोचदित्यलम् ॥ ३४ ॥

---

1—Mss. 1, 2 पलायितम्

[1]इति ब्रुवाणं समुवाच राघवम् ,
प्रहस्य वाचं स निशाचराधिपः ॥
कृपांकुरो मे हृदि वीक्ष्य वर्धते ,
परो नु हेतुस्तव बालविग्रहम् ॥ ३६ ॥

सुचीर्णचौरप्रकृतिश्चिरन्तना -
न तेजसां मूढ वयो विलोक्यते ॥
कृपीटयोनिस्तनुरप्यलं महा -
वनस्य दाहाय हि केवलात्मना ,। ३७ ॥

समानवास्त्रेण मरुत्सधर्मिणा -
नृपात्मजेनोरसि ताडितोऽपतत् ॥
विघूर्णमानो मरुतेव विच्युतः ,
छदः पयोधावपि शैलसन्निभः ॥ ३८ ॥

परीक्षणायैव विदेहकन्यका ,
सुखोपलब्धेः ससुबाहुमप्यरम् ॥
विभज्य बाणैरिव शाकुनि [2]सदा -
द्विहङ्गमेभ्यो बहिराश्रमं बलिम् ॥ ३९ ॥

हतेषु ताभ्यामिति ते[3]षुरातिषु ,
गृहीतमौनस्य मुनेर्महात्मनः ॥
प्रशस्यते तौ क्रतुकारिणौ विधे -
रनैषुरन्तं विधिनाखिला क्रिया ॥ ४० ॥

---

1—Mss. रा० प्र० ४–६१

2—Mss. 1; 2 (मदाद्)



3—Mss. 1, 2 (ष्वरातिषु)

[1]मखान्तराय प्रतिघातिनावुभौ ,
स तौ प्रसन्नौ विबुधाशिषा सह ।।
कृतप्रणामौ चलकाकपक्षकौ ,
कुशग्रहाऽऽकर्कशपाणिनाऽस्पृशत् ।। ४१ ।।

निमन्त्रितो भूपतिना कृतक्रतु -
स्ततः प्रतस्थे मिथिलां प्रति व्रजन् ।।
स राघवावप्यनयत्सहैव तौ ,
समुत्सुकावीशधनुर्विलोकने ।। ४२ ।।

उपेयिवांस्तत्र ततस्तदान्वितो रहो -
ऽनुपाध्यापिनि यत्र संस्तरे ।।
शचीपतिर्यत्र ऋषेरपत्रपः ,
कलत्रसत्रे स्वयमास दीक्षितः ।। ४३ ।।

पुरोन्तिके[2] तस्य सधूमभासुरा ,
शिखेव बर्हेः स हिमाम्बुधाविधोः ।।
कलेव पूर्णास्य सु[3]भेव चांभसि -
रवेरकस्मादुदियाय भामिनी ।। ४४ ।।

सपाद एवास्य इति प्रिया मुने -
रधः सपादं दधतं शिलातले ।।
प्रहस्य भास्वन्तमुदस्य सा पदम् ,
पतिं प्रपेदे प्रतिपूज्य राघवम् ।। ४५ ।।

---

1—Mss. (रा० प्र० ५-१)

2—Mss. 2 पुरोन्तिके इति पाठः ।

3—Mss. 1, 2 (शु)

विधूतशापामवगम्यतां ततः ,
प्रियां मुनेरात्मपदाब्जरेणुतः ॥
प्रणम्यतां सोऽपि सुसत्कृतस्तया ,
सलक्ष्मणोऽगान्नृपयज्ञवाटिकाम् ॥ ४६ ॥

उपेतमाकर्ण्य तमुग्रतेजसम् ,
समेतमात्मोपवने नराधिपः ॥
स राघवाभ्यामिव सूर्यमभ्यगा-
[1]त्सपर्य्ययामाचिरपिङ्गलान्वितम् ॥ ४७ ॥

[2]विलोचनैस्तावनिमेषवृत्तिभः ,
क्षणं पिबन्तौऽधिगतामरश्रियौ ॥
सुमेनिरे भूमिगताविवाश्विनौ ,
दिवौ विदेहाधिपपत्तनौकसः ॥ ४८ ॥

अनन्यसाधारणसम्भवश्रियो -
स्तयोरहम्पूर्विकयोपसर्पिणाम् ॥
[3]मनोऽमन्यत्क्षणमात्रमन्तरम् ,
महान्तरायं पिबतां दृशानने ॥ ४९ ॥

वपुस्तदासेचनकं जगद्दृशो -
र्विलोक्य शुद्धान्वयजन्मनः शिशोः ॥
स राघवस्यानुवचो मुहुर्मुहुः ,
निनिन्द राजापणमात्मनो हृदा ॥ ५० ॥

---

**1—Mss.** सहार्थकामं सहसा सपर्यया तमभ्यगाद्धर्मविवाक्षविग्रहम् । (रा० प्र० ५--१७)

**2—Mss.** (रा० प्र० ५--१८)

**3—Mss.** मेने मनाक् पक्ष्मनिपातमप्युरु' मनोंतरायं पिबता दृशानने (रा० प्र० ५--२२)

तदेङ्गितज्ञो मुनिरात्मनो मुदा -
विधौ [1]सयूपेऽवसिते स कालवित् ।।
शिशुं शिवेष्ठा स निरीक्षणोत्सुकम्,
तमेव तस्मै सदसि न्यवेदयत् ।। ५१ ।।

स सत्यमेवं प्रतिपूज्य तद्वचो,
नताननोऽप्याहितदृक्तदानने ।।
विवक्तुकामो मुनिनाभ्युदीरितो,
वदेति बद्धाञ्जलिरभ्यभाषत ।। ५२ ।।

अधिज्यमाधातुमिदं महात्मना -
मसाध्यमेतत्त्रिपुरारिकार्मुकम् ।।
विलोक्य वीरावलि जाग्रतोऽपि ये,
अथार्पितास्तेप्युपतद्विरेजिरे ।। ५३ ।।

यथा[2] दिदृक्षामिषतो मनस्विनो,
यदृच्छयात्रोपगता यशस्विनः ।।
तथा ययुश्चापधरास्तपस्विनः,
प्रशान्तचित्ता इव के तपस्विनः ।। ५४ ।।

तदा[3]ददत्कोपि सुहृत्करांगुली -
मुवाच मौर्व्यञ्जनकर्कशत्वचम् ।।
प्रशस्तमस्माद्गमनं दुरत्ययो,
विधिर्भवेत् सज्यमिदं नवाकृती ।। ५५ ।।

---

1—Mss. यज्ञे नृपस्यावसिते स कालवित् (रा० प्र० ५--२४)

2—(रा० प्र० ६--३२)

3—(रा० प्र० ६--३८)

उपांशुवोच्चैः सुहृदामुपश्रुति -
प्रयुक्तमप्यात्मवतामिवेति सः ॥
तमाकलय्याकलनीयमेतत् ,
सखे किमेतद्धनुरित्यवीवदत् ॥ ५६ ॥

ननाम[1] सन्तैजसमाप्यमानिलम् ,
न भौममेवेदमुदारभास्वरम् ॥
विरुद्धनानागुणराजिसंश्रयम् ,
समक्षमक्षभ्रममातनोत्यलम् ॥ ५७ ॥

तदन्तरे[2] भूसुरकोऽपि सस्मयः ,
प्रलम्बबाहुर्विगतद्विषद्भयः ॥
विनद्य नांदीव समुद्य सत्वरम् ,
शरासनं कर्तुमधीज्यमुद्यतः ॥ ५८ ॥

यथाबलं[3] विक्रमतापतस्ततो -
न तेन तस्याप्यटिनि[4]विचालिता ॥
तृणीकृतस्त्रैणरतेर्यतात्मनो -
र्मनोभुवावृत्तिरिवोर्ध्वरेतसः ॥ ५९ ॥

[5]यथाधिकारं द्विज तस्य तिष्ठतो ,
विदेहजारूपविशेष- सिद्धये ॥
पदे मदेनाभिहिताप्तिवासर -
स्ततः पदादेश इवास्थितोऽपरः ॥ ६० ॥

---

1—(रा० प्र० ६--४६) 2—(रा० प्र० ६--४९)

3—(रा० प्र० ६--५०)

4—Mss. 1, 2 चचाल नोचित... इति पाठः ।



5—(रा० प्र० ६--५२)

सचाप[1]विद्याबलबुद्धिपूर्वकम् ,
भ्रमन्नुपांत्येऽस्य तदुन्नयन्नपि ॥
मुहुर्मुहुः संस्थगितो मनागपि ,
चचाल नो चित्तमिवाधिसम्पदः ॥ ६१ ॥

[2]उदस्तपक्षाबहुवेगधारिणो ,
विलक्ष्य वीरं तमुदक्षमुत्थिताः ॥
निपेतुरस्मिन् युगपन्नराधिपाः ,
खले कपोता इव निश्चिताप्तयः ॥ ६२ ॥

[3]सुमृष्टमुष्टिस्थिरकोटिकान्तिमद् -
बृहद्गुणं गीष्यति गीतगौरवम् ॥
पुरःस्थितं तैरभवत्समागतैः ,
कृतं न किंचित्तदलोकि केवलम् ॥ ६३ ॥

[4]विवर्तमानेष्वकृतप्रवृत्तिषु ,
समानसूत्रेष्विव तेषु राजसु ॥
अतिष्ठतां तुल्यबलावुभौ यथा ,
विशेषसूत्रे विषये प्रवर्तितम् ॥ ६४ ॥

समान[5]सत्वोऽप्यवरस्तयोर्ययौ -
विचक्रमे तस्य परेण पार्श्वयोः ॥
पदं पदार्थे हि परं प्रवर्तते ,
नचाऽवरं विप्रतिषेध उत्थिते ॥ ६५ ॥

---

1—(रा० प्र० ६--५३) 2—(रा० प्र० ६--५६)

3—(रा० प्र० ६--५७) 4—(रा० प्र० ६--५८)

5—(रा० प्र० ६--५९)

ततः समागत्य कृतप्रदक्षिणा ,
धृतासनेनापि च तेन मौनिना ॥
सुरालयाल्लब्धवृषेः स्थिरात्मन -
स्तदा वितेने तुलना तपस्विनः ॥ ६६ ॥

परै[1] समेतैरपि चालितं चरैः ,
पदान्नचैकं पदमप्यदोऽचलत् ॥
शनैरनेकै रथिभिः प्रधावितो -
ऽप्युदात्तधीरोऽतिरथीव संयुगे ॥ ६७ ॥

जगत्त्रयाधारशिवाद्रितोलनात् ,
प्रसिद्धवीर्यातिशयो दशाननः ॥
निलीय माया समुपेत्य राक्षसीम् ,
सकामकोप्यत्र न किं समागतम् ॥ ६८ ॥

[2]इति ब्रवीतिस्म नृपो मतङ्गजा ,
मदोत्कटा मन्दरमानहारिणः ॥
गतस्पृहा यत्र तु तत्र केवलम् ,
स्वभावलोलैः कलभैरलं मुनेः ॥ ६९ ॥

श्रवो बन्धुरं बन्धुमम्भोजराजी ,
समुद्यन्मरन्दस्य सद्भृङ्गसेव्यम् ॥
सवंशस्थवृत्तोल्लसत्सर्गबन्धम् ,
निशम्याधिविद्वान्विशेषप्रभोऽभूत् ॥ ७० ॥

---

1—(रा० प्र० ५--६१)



2—(रा० प्र० ६--६२)

तं प्रत्युवाच तपसां निधिरप्रमेयो ,
वाचा बलेन वयसाऽलमयं शृणुष्व ॥
अद्यैव सिद्धिमुपयास्यतिकार्मुके ते ,
वृद्धिं यथा बलिमखे खलु वामनोऽपि ॥ ७१ ॥

[1]ओमित्युक्त्वा मैथिलेशो मुनीन्द्रम् ,
सांद्रस्नेहोद्भावरोमाञ्चिताङ्गम् ॥
पश्यन्रामं सर्वलोकाभिरामम् ,
पूर्णं मेने तत्क्षणादात्मकामम् ॥ ७२ ॥

तत्प्रस्थापनताटकावधमखेष्वासोक्तिसम्भूषितो -
दुर्गादत्तसुशर्मपानकवरीपुत्रस्य तीर्थे कुरोः ॥
सर्गः श्रीरणवीरसिंहविभुनादिष्टस्य संवासिन -
श्चण्डीदासकवेःकृतावुपगतः पूर्तिचतुर्थोप्यलम् ॥ ७३ ॥

श्रीमन्महाराजाधिराज- जम्बू-काश्मीराद्यनेकदेशाधीश
श्रीरणवीरसिंहवर्मादिष्ट- श्रीकुरुक्षेत्र-मध्यरेखाँतर्गत-
पुण्डरीकपुरप्रसिद्ध - सवालवंशावतंस
श्रीदुर्गादत्तात्मजनव्यचण्डीदासकविकृतौ
"रघुनाथगुणोदये" महाकाव्ये
श्रीरामागमन-ताटकादिराक्षसवध-मुनिमखपूर्तिमिथिलेश-
सम्मेलनशिवेश्वासवर्णनो नाम चतुर्थः सर्गः ॥ ४ ॥

---

(1—रा० प्र० ६--६४)

ॐ

श्री रघुनाथगुणोदय- महाकाव्ये

# पंचमः सर्गः

[1] अथ रामगुणार्णवे सुधी -
जलपायीव स मुद्रितेक्षणः ॥
मनसा निममज्ज निश्वस -
न्निव मुक्तावलिकीर्तिलब्धये ॥ १ ॥

[2] पुनरुन्नतकन्धरस्य तन् -
मुख- राका- शशिसङ्गमेच्छया ॥
समयायि सदक्षपक्षकै -
स्सहते नोर्ध्वचरी चकोरता ॥ २ ॥

[3] नृपतेऽत्र चकोरयोरिदम्,
छलमुन्मेषनिमेषणं पुरा ॥
अहमस्मि मुखाब्जचन्द्रिका -
मिति तस्यास्ति पिपासतो [4] स्वरा ॥ ३ ॥

---

1—(रा० प्र० ७–१) 2—(रा० प्र० ७--२) 3—(रा० प्र० ७--३)

4—Mss. 1, 2 (त्वरा)

[1]चिकुरैरुपलक्षितं घनै -
रुपरिष्टादधरे त्विषां चयैः ॥
परमस्थलाट[2]मर्ष्यते ,
जलदार्द्धान्तरिताऽमृतांशवे ॥ ४ ॥

वदनस्य रघूत्तमस्य य -
च्चिरपानं जनकेक्षणद्वयम् ॥
[3]तदुयायि निमेषकैतवा -
दकरोदन्तरिवाधिकं पुनः ॥ ५ ॥

[4]नयनेऽनुतदङ्गसौष्ठव -
ग्रहणेनाधिकशंकया किल ॥
दधतुर्धरिणीभृतस्तदा ,
सममुन्मेषनिमेषधारणाम् ॥ ६ ॥

[5]तमवेक्ष्य सुबाहुमुल्लसद् ,
हृदि संस्मृत्य धनुस्तनुप्रभम् ॥
क्षितिपाननमाशुर्निविशत् ,
प्रविशद्दिन्दुरिवांबुदेऽभवत् ॥ ७ ॥

[6]स्तुवतोऽनुपदं रघूत्तमम् ,
नृपतो नर्मसखी यदाऽऽश्रृणोत् ॥
गदितुं तदुपेत्य सस्मितम् ,
क्षितिजायै त्वरयोपचक्रमे ॥ ८ ॥

---

1—(रा० प्र० ७–४) 2—Mss. 1, 2 (मीर्ष्यते)

3—"आसमन्तादयते उच्छलदिति भावः" काव्यकर्तुश्चण्डीदासस्य टिप्पणी (रा० प्र० ७–५)

4—(रा० प्र० ७--६) 5—(रा० प्र० ७--७)

6 – रा० प्र० ७–७)

[1]शृणु राम इति प्रणम्य तत्,
किमपि क्रामति तत्सखीजने ॥
इति प्रष्टुमिव श्रुतः स किम्,
श्रुतिमूलानुगते तदक्षिणी ॥ ९ ॥

[2]निशमय्य तदाह्वमेव तद् -
हृदयं सा वरवर्णिनी तदा ॥
सुनिधाय निमील्य लोचने,
हृदि सस्मार शुकोपवर्णितम् ॥ १० ॥

कथनाय किमप्युपस्थिताम्,
पुनरादेशविशेषमिच्छतीम् ॥
विजिताऽऽकचदम्बुजन्मना,
नयने[3]नोन्मिषतैव सादिशत् ॥ ११ ॥

[4]अपि वीक्ष्य तथैव तां स्थिता,
सरसा रम्यरवाभिकांक्षिणी ॥
शिखीनीवसमुल्लसद्घटाम्,
चपलापांग[5]विकाशितान्तराम् ॥ १२ ॥

अवबुध्य तदिङ्गितं तत -
स्सतताभ्यन्तरचारिणीसखी ॥
स्मितपूर्वमवेक्ष्य तन्मुखम्,
मधुरं तामिदमभ्यभाषत ॥ १३ ॥

---

1—(रा० प्र० ७--९) 2—(रा० प्र० ७--१०)

3—Mss. बत तां सोन्मिषिताऽक्षिणादिशत् (रा० प्र० ७--११)



4—(रा० प्र० ७--१२) 5—Mss. 1 विकाशिताननाम् इति पाठः ।

[1]विदितावपि ते पितुर्मुखा -
न्मुनिना गाधिसुतेन संयुतौ ।।
कुसुमोपवने निरीक्षितौ ,
तव हेतोर्विदुषीति बुध्यताम् ।। १४ ।।

कमनीय करात्त[2]कार्मुकौ ,
कनकालङ्कृतकान्तसायकौ ।।
कलकण्ठिकलापकेशिनौ ,
किमु कामौ कलयाकृत द्वयौ ।। १५ ।।

[3]जनकेन ममार्तिहारिणा -
वकृताद्यावधिपाणिपीडनम् ।।
इममब्धिमुदात्तमागता -
वपनेतुं तव तौ किमश्विनौ ।। १६ ।।

[4]सततायतकान्तिमुच्चणौ ,
सरलौ शीलवयो विलक्षणौ ।।
सनयौ तरलाननद्युती ,
तनयौ पंक्तिरथस्य भूपतेः ।। १७ ।।

बलतो भुवि बालकावपि ,
प्रथितौ वीरवरेषु वर्मणा ,
विलसद्रुरुचिरामलक्ष्मणौ ,
नयना[5]सेचनकैकलक्ष्मणौ ।। १८ ।।

---

1—रा० प्र० ७--१४) 2—करस्थकुसुमालंकृत (रा० प्र०७-=१२)

3— जनकोऽखिलरुक्चिकित्सकावकृताद्यावधि मे करग्रहम् ।
मनसोरुजमुत्थितामिमामपनेतुं तत्र किं किमश्विनौ ॥ रा० प्र० ७-१६

4— सनयौ तरलाननद्युतीसरलौ शीलवयो विलक्षणौ ।
बलनिर्जितवित्त राक्षसौ सनयौ पंक्तिरथस्य भूपतेः । रा० प्र० ७--१७)
(वित्त राक्षसै—प्रसिद्धा राक्षसा याभ्ययाम्—इति काव्यकारस्यार्थः ।

5— किमहो सर्वगुणोपलक्षितौ—इति पाठान्तरम् (रा० प्र० ७-१८)

[1]अपि तत्र तनुत्रशोभनो ,
भुवि यो राम इति प्रकीर्त्यते ॥
सखि तस्य पदांगुलित्विषो ,
नहि कमो लभते कलामपि ॥ १९ ॥

[2]मदनोऽस्य तनोस्तुलेप्सया ,
ननु शम्भोर्नयनानलेऽजलत् ॥
[3]अतनुत्वमुतापतों नहि ,
न महत्साम्य समीक्षते शिवम् ॥ २० ॥

विजितोऽस्मि तनुमदीदह -
द्वरमस्मादतनुत्वमेव सः ॥
प्रथितैव जगत्यनङ्गता ,
नहि भाग्येन विनेष्टसिद्धयः ॥ २१ ॥

चपलेन विचालयन्ति ते ,
चिकुरास्तस्य न कस्य [4]चिक्कणाः ॥
सजलाम्बुदभृङ्गनीलिमा -
त्यवलम्बं मनसो विलम्बिनः ॥ २२ ॥

वपुषा विनयेन विद्यया ,
वयसा साध्वि कुलेन सुश्रिया ॥
विशदोऽस्त्यपि तत्र दूषणम् ,
मृदुलास्ते कुटिलाश्च कुन्तलाः ॥ २३ ॥

---

1—(रा० प्र० ७-१९) 2—रा० प्र० ७-२०)

3—(अतनुत्वमुताप सोऽपि किं न महत्साम्यमभीक्षते शिवम्) रा. प्र. ७-२१

4— 1 चिक्कण इति पाठः ।

इति सार्वजनीनमूहनम् ,
विधिरेखानुललाटमालिखत् ॥
इह सोऽस्य तु तच्चतुष्टयीम् ,
चतुरर्थान्वितरिष्यतीत्यलम् ॥ २४ ॥

बहुशो लिखिता स्वयम्भुवा ,
निजहस्तस्थितये यथातथम् ॥
विहितं तदनल्पसौष्ठवा -
च्चिरसम्पादितशिल्पपट्टिका ॥ २५ ॥

भ्रूकुटीमिषमित्युपाहितम्
बलिनाभंगभियापरं धनुः ॥
नयनेन तवाचिरः कदा ,
करचापाकलनं भवेन्न वा ॥ २५ ॥

कमलं समतर्जि चक्षुषा ,
विजितो [1]येन मुखेन चन्द्रमा ॥
न समोऽस्ति तयोरतद्वयी ,
चिरभिन्ने रुचिरे चराचरे ॥ २७ ॥

जडमंबुजमित्युपेक्षितम् ,
सकलङ्कोऽपि हिमांशुरुज्झितः ॥
इति तस्य मुखोपमालये ,
भुवि द्रारिद्रय[2]मनन्यदर्शनात् ॥ २८ ॥

---

1—Mss. 2. विजितस्तेन इति पाठः ।

2—महोमहत्तरम् (रा० प्र० ७--२७)

अधरीकृतबिम्बशोणिमा -
तिशयं तस्य शुचिस्मिताधरम् ॥
नहि कापि समीक्ष्य शक्ष्यति ,
[1]विहातुं हरिणी वराकिनी ॥ २९ ॥

न स रागमपेतुमिच्छति ,
नृपयोषापि वने तथाविधे ॥
विदुषी कथमत्र तत्यजे ,
यदि रागः पशुनापि दुस्त्यजः ॥ ३० ॥

अरुणोदयमीहते सदानु -
विभान्तन्नुजडापि पद्मिनी ॥
सततारुणिमोदयाश्रयम् ,
सरले का सुमतिर्न संश्रयेत् ॥ ३१ ॥

क्व सुधांशुरिवास्य कन्धरः ,
क्व नु कम्बुश्रुतिभेदिनिःस्वनः ॥
कनकद्युतिरेष धूसरो -
[2]रुद्धमेवास्य तथोपवर्णने ॥ ३२ ॥

[3]भुजयोर्युगमप्यनूच्छल -
द्युतिदण्डीकृतवज्रयोरिव ॥
अधिसारि यदन्तरे बहिः ,
परिपुष्णाति मृणाललालसाम् ॥ ३३ ॥

1—Mss. (ननु गंतुं...)

2—Mss. 1; 2 (शुचः...)

3—(रा०प्र० ७-३१) 4—(रा० प्र०७-६६)

भुजगाधिपतिः रसातलम् ,
भुजयुग्माहृतभोगसौष्ठवः ॥
अपुनर्गमनाय शिश्रिये -
ऽरिभवः पारिभवो हि दुःसहः ॥ ३४ ॥

परिघौ[1] परदुर्गदारणे ,
स्वपुरे तौ द्विषदागमेऽर्गले ॥
प्रविलाप्य पविप्रसारितम् ,
सदुरस्तस्य तिरः कपाटवत् ॥ ३५ ॥

[2]अतिमंजुलयोरसश्रिया ,
युगलेनापि निगूढजत्रुणोः ॥
उपलक्षितमक्षिसाक्षिकम् ,
त्वगुपादेयमपि प्रतिद्वयम् ॥ ३६ ॥

[3]महदद्भुतमेतदद्भुते ,
निजकाठिन्यमथोऽपि मार्दवम् ॥
अनुवादयतीव चक्षुषा ,
तददोऽमुष्य बृहद्भुजान्तरम् ॥ ३७ ॥

नवपल्लवमूलरोचिषः ,
किरणास्पृष्टमपि त्विषा रवेः ॥
अपि बोधितमम्बुजं मनाक् ,
न तथाप्यस्य करश्रियार्चिते ॥ ३८ ॥

---

4—Mss. 1, 2 (परिघोऽपर)

2—(रा० म० ७-३४) 3—(रा०म० ७-३५)

नखनूतनपल्लवोंगुली ,
चलशाखाललितोऽनुपर्वणि ॥
प्रतियाचकयाचितार्थदो ,
नभिदाकल्पतरुः करोऽस्य वा ॥ ३६ ॥

स रसोपमकल्पपादपः ,
परशोर्जितमौक्तिकावलिः ॥
सधनुकृतशंखसंग्रहो -
न समुद्रोऽस्यकरो विभाव्यते ॥ ४० ॥

त्वयि कांचनपर्वतो भुवि ,
प्रतिपर्वार्थिजनोपलम्भनम् ॥
वयसीहवरेऽप्यनेन सो -
ऽप्युरुपालभ्यनवेलमित्यसोम् ॥ ४१ ॥

अपि सम्भृतवर्मणावृता -
विजितावर्तवरास्य नाभिका ॥
बहिरन्तरगापि भासते ,
सजलाम्भोदवृतेव कौमुदी ॥ ४२ ॥

अधिटंक्य युतेऽसितप्रभै -
र्मणिभिर्वज्रमयेऽर्घभाजने ॥
सुविधाय विरंचिरुन्मुखे -
ऽमुखेऽस्याकृतनानुसिद्धये ॥ ४३ ॥

---

1—(रा० प्र० ७-४२)

2—Mss. 1, 2 (सरसोपम)

3—Mss. 1, 2 (जानु)

विद्युतांगुलिवेद्यटंकना -
मविदन्तोऽत्र विधिज्ञमानिनः ॥
अधुनाप्यत एव कुर्वते ,
ध्रुवमेतामनुपैतृकाध्वरे ॥ ४४ ॥

अपहर्तुमलौकिकीं रुचिम् ,
वदनस्यास्य कठोरचन्द्रमाः ॥
ध्रुवमाष तया प्रतर्जितो -
दशधा भूय पदं नखोपधेः ॥ ४५ ॥

[1]गमनेन विलज्जिता गजा -
समदा प्राकृतिकेन काननम् ॥
विविशुर्बलिनोऽस्य विक्रमा -
दिव भीता बहुशो मृगाधिपाः ॥ ४६ ॥

असवर्ण इति प्रधर्षितो -
यशसा भानुरिवौजसा शशी ॥
चकितौ तदनूदयाचल -
मुदयेते प्रतिमे परस्परम् ॥ ४७ ॥

[2]रिपुपर्वतभेदने पविः ,
सुहृदाश्लेषविधौ हिमद्युतिः ॥
द्युतरुस्तरुले[3]यमर्थिनाम् ,
समुदाकामदुघोऽनुपायिनाम् ॥ ४८ ॥

---

1—(रा० प्र० ७--६५) 2—(रा० प्र० ७--६४)

3—Mss. 1, 2 (तरलोऽय...)

[1]ददतोऽस्य सुरालयं क्रिय -
दिति [2]निश्चित्य निशांतकैतवात् ॥
अभवन्नुरुशंकिता सुराः ,
प्रतिदिक्ततप्रतियामयामिकाः ॥ ४६ ॥

[3]नयनानुगमस्य पंकजम् ,
रविरित्यत्र पुरा करार्प्पणम् ॥
*उरुते ह्युदयाय पूरुषः ,
सुबुभूषुर्नृपवर्गवर्तिनि ॥ ५० ॥

[4]कुमुदानि विकाश्य तद्गुणा -
ऽनुचराणीति ततोऽस्य संश्रयन् ॥
नवकीर्तिमुदञ्चितस्तया ,
पदमुच्चैः क्रमतो हि लभ्यते ॥ ५१ ॥

[5]स्वजनाब्जविकाशकारिणो -
महसोऽमुष्यमहर्विलङ्घिनः ॥
रविरेष लवोब्जभासकोऽनति -
हेतुः प्रकृतिः स्वतो भवः ॥ ५२ ॥

[6]निलयच्छलतो निलीय य -
द्दशदिक्षु त्रिदशै[7]रलुण्ठित ॥
अतिनाकविसर्पिणो विधुः ,
सुपुलाका यशसोऽस्य तारिकाः ॥ ५३ ॥

---

1—(रा० प्र० ७--६३) 2—(रा० प्र० ७--५७)

3—(रा० प्र० ७--५८) 4—(रा० प्र० ७--६०)

5—(रा० प्र० ७--६७) 6—(रा. प्र. ७ ६६)

7—Mss. 1 रलंण्टिशत् इति पाठः ।



*—Mss. 1, 2 (कुरुते)

[1]गणितोऽपि चिरास्य पन्नगो -
गुणराशिस्त्वधुना विशिष्यते ।।
इति भावनयेव किं मुहुः ,
[2]स्वयमप्यास स शेषशब्दभाक् ।। ५४ ।।

कथयत्यपि भर्तु रङ्कगा ,
बहिः संस्तुत्य मघोनि यत्कथाः ।।
अनुगाथमुपेतसम्भ्रमा ,
क्व नु साचीकृतदृक्शचीर्भवेत् ।। ५५ ।।

सभया सततं सलज्जया ,
सरसाकुञ्चितयापि तन्मनः ।।
अघुनैव दृशा प्रदर्श्यते ,
परकीया रतिरङ्गभङ्गुरम् ।। ५६ ।।

प्रतिपर्वणि [3]सुप्रियापि या ,
कुरुतीर्थे कृतपुण्यसञ्चया ।।
परिहास्य सुरेशसुभ्रुवः ,
सविधे सास्य सुखं शयिष्यति ।। ५७ ।।

[4]मृदुलं शिरसोऽवलम्ब्य तद् -
भुजमाश्लिष्य च का वदिष्यति ।।
शयितोऽमृतसस्मिताऽक्षरम् ,
प्रिय ! केयूरतटीं पराकुरु ।। ५८ ।।

---

1—(रा० प्र० ७–५५)
2—Mss. स्वयमपि तेन सहाय शेषताम् इति पाठान्तरम् (रा० प्र०)
3—Mss. प्रत्यहं त्वया इति पाठः । (रा० प्र० ७--३७)
4—(रा० प्र० ७--३८)

[1]लुलितालकमुन्नमय्य तन् -
मुखसौन्दर्यविलोकनच्छलात् ॥
निजमास्यमुरःस्थया कया ,
त्रिदशेशोऽपि तिरस्करिष्यते ॥ ५९ ॥

[2]सदृशस्तव तन्वि पश्य तम् ,
त्वमपि श्रीरिव तस्य शार्ङ्गिणः ॥
अनुरूपगुणा क्वचिद्भवे -
द्यदनूनानतिरिक्तयोर्द्वयम् ॥ ६० ॥

[3]अपि सौधशिरोगृहे शय -
न्निशि पूर्णेन्दुकलार्चितान्तरे ॥
अधिकं पिब तन्मुखश्रियम् ,
सुचकोरीव सुधां सुधांशुजाम् ॥ ६१ ॥

[4]अधिरुह्य निशान्तशेखरम् ,
विहरन्ती सुमदोऽस्य सन्निधौ ॥
क्षणदासु निजाननश्रिया ,
सुषमां चन्द्रमसीमपाकुरु ॥ ६२ ॥

[5]अनुदात्तवचो द्विजस्वरे ,
स्वरितोदात्तशिषण्डिसामगे ॥
सरघू शरयूपशोभिते ,
विहरस्वोपवनाऽध्वरालये ॥ ६३ ॥

---

1—(र० प्र० ७-४०) 2—(रा. प्र. ७-६७)

3—Mss. 1, 2 (शयन्)

4—(रा. प्र. ७-६८) 5—(रा. प्र. ७-६९) 6—(रा. प्र. ७-७०)

[1]प्रतिगेहसुधांशुजालिका -
मनुवातायनपङ्कजामिव ॥
वदनैर्नयनैर्नतभ्रुवाम् ,
त्वमयोध्यामनुवीथि भावय ॥ ६४ ॥

भवती वदनश्रियो जुषाम् ,
[2]मधुराऽऽकर्णविशालतां दृशाम् ॥
सफली कुरु सत्रपेक्षणैः ,
शशिलेखेव [3]मृगीदृशाम् ॥ ६५ ॥

[4]सजलोज्ज्वलशातकुम्भिकाम् ,
कलशालंकृतवेदिकान्तराम् ॥
प्रतिचत्वरपुष्पसंस्तराम् ,
कुरु[5]काङ्कककुलैरिवापराम्[6] ॥ ६६ ॥

तदनु [7]प्रविविश्य भूभुजो ,
महिला सार्द्धशतत्रयाजिरे ॥
भव तत्र तदक्षिसन्ततेः ,
कुमुदालेरिव नव्यकौमुदी ॥ ६७ ॥

मदकुंकुमरञ्जितस्तनैः ,
विहरन्त्यां त्वयि तत्र यौवनैः ॥
सलिले सरयू सरस्वती ,
त्वरितोर्मी मिलितेव भास्यति ॥ ६८ ॥

---

1– (रा. प्र. ७-७१)

2—Mss. विपुलाकर्ण इति पाठान्तरम् । (रा० प्र० ७--७२)

3—Mss. 1 (हि तन्मृगीदृशाम्), 2 तन्मृगीदृशाम् पाठः ।

4—(रा० प्र० ६--७३) 5—Mss. 1, 2 (कारुक)

6— अन्यामिव इति रा. प्र. काव्यकारस्य टिप्पणी ।

7—Mss. प्रतिवेश्म इति पाठान्तरम् । (रा० प्र० ७--७४)

[1]सरयूसरलद्रुमोच्छल -
न्नवनिर्याससुगन्धबन्धुरः ॥
पवनः प्रथमं प्रयास्यति ,
तव सीम्नि शनै[2]रिवाध्वगः ॥ ६९ ॥

सरया स्फुरदम्बुजावली ,
कलकण्ठीभिरुपाश्रिताशया ॥
सरयूरुपतिष्ठते पुरा ,
प्रविशन्त्या पथि मालिनीव सा ॥ ७० ॥

स्वजनैरुपकण्ठमादृता ,
समये तामुपलम्ब्य तत्परः ॥
प्रविवेक्ष्यसि तत्र तेन तै -
र्दिवि देवैर्हरिणेव वासवी ॥ ७१ ॥

समनीयत सुन्दरीमुख -
प्रियवृत्तान्तरसर्गसम्भृतिम् ॥
बहिः रक्षयितुं निजान्तरे ,
सुधिया साथ तयेव वर्णना ॥ ७२ ॥

[3]आनन्दसन्दोहभरालसांगी ,
विज्ञापितेत्थं स्वसखीजनेन ॥
साङ्गीकृतं तामवदन्न किन्तु -
र्मंदस्मितैरुत्तरयांचकार ॥ ७३ ॥

---

1—(रा० प्र० ७--७९)

2—Mss. 1 2, (शनकैः)

3—(रा० प्र० ७—८१)

[1]विदितविशदभावां तां करेणावलम्ब्य ,
परिपिहितगवाक्षे मन्दिरेन्तर्विवेश ॥
कथितमपि दृशा तद्बोधितुं सा हि सर्वम् ,
किमपि विमलचित्ते गोपनीयं न मित्रे ॥ ७४ ॥

[2]अपि रहसि सखी तां प्रत्युवाचेति तूष्णीम् ,
शृणु किमिति हि मे स प्राणवृत्तेर्विशेषः ॥
कथमपि तमिहैव स्वानयस्व प्रयाहि ,
सरसरुचिरवाग्भिः बोधयत्वित्थमेव ॥ ७५ ॥

[3]किमिति वदसि भूपो मामनालोचितं त्वम् ,
वचनमिदमपथ्यं किं न तथ्यं पितुस्ते ॥
पणधरणमिदं ज्यारोपणं मेऽस्य पुत्र्याः ,
वरयुतिविधिशुल्को भूपमात्रे प्रसिद्धम् ॥ ७६ ॥

[4]कथनमपि वयस्या मानसे तत्तु तस्याः ,
किमिति परिहसंत्या स्वाङ्गभङ्गाय नूनम् ॥
अभवदपि तथैवोत्साहितेऽप्यम्बुवृष्ट्या ,
कुसुमितसहकारे वज्रपातेन तुल्यम् ॥ ७७ ॥

[5]मुकुलितनयनां तां म्लायमानाननश्रीः ,
शिथिलकरयुगा सा तेन तस्या[6]स्तदासीत् ॥
श्लथयदुदित- पुष्पोद्गुच्छसम्भावनाशा ,
तपनकरकुलेन क्लान्तपत्रा लतेव ॥ ७८ ॥

---

1—(रा० प्र० ७--८२) 2—(रा० प्र० ७--८३)

3—(रा० प्र० ७--८४) 4—(रा० प्र० ७--८६)

5—(रा० प्र० ७--८७)



6—Mss. 1, 2 संख्यां तेन दासेनेति काव्यकारस्य टिप्पणी ।

[1]किमहमिति हसामि यामि तत्साधयामि ,
तव हृदयमशेषं किं न जाने वयस्ये ॥
पुनरपि निपतन्ती तन्निशम्योत्थिता हि ,
स्खलित- पद- जनस्योद्वाक्यमेवावलम्बः ॥ ७९ ॥

[2]तदतिमधुरवाचा तर्प्पितान्तर्भवन्त्या ,
श्रुतिविवर - विशेषाद्विप्रणालीमुखेन ॥
स्फुरदमलरुचा सा लब्धवर्णा तदासी -
दुभयजल- निषिक्त- कांचिनीवल्लरीव ॥ ८० ॥

श्रीरामोरुगुणावलीचणसखीवाग्भूमिजोत्साहयुग् -
दुर्गादत्तसुशर्मपानकवरीपुत्रस्य तीर्थे कुरोः ॥
सर्गः श्रीरणवीरसिंहविभुनादिष्टस्य संवासिन -
श्चण्डीदासकवेः कृतावुपगतः सम्पूर्णतां पञ्चमः ॥ ८१ ॥

श्रीमन्महाराजाधिराज- जम्बू-काश्मीराद्यनेकदेशाधीश
श्रीरणवीरसिंहवर्मादिष्ट- श्रीकुरुक्षेत्र-मध्यरेखाँतर्गत
पुण्डरीकपुरप्रसिद्ध - सवालवंशावतंस
श्रीदुर्गादत्तात्मजनव्यचण्डीदासकविकृतौ
"रघुनाथगुणोदये" महाकाव्ये
श्रीरामगुणवर्णनो नाम पञ्चमः सर्गः ॥ ५ ॥

———

1—(रा० प्र० ७–८८) 2—(रा० प्र० ७–८९)

ॐ

श्री रघुनाथगुणोदय- महाकाव्ये

# षष्ठः सर्गः

श्रीः

सेन्द्रनीलमणिमन्दिरान्निशि ,
तत्सखी विधुसखी बभौ ततः ।।
तत्कपाटमुद्घाट्य निस्सृता ,
चन्द्ररश्मिरिव नीरदान्तरात् ॥ १ ॥

नीलचैलयुगलेन सम्वृता ,
सा [1]ततोनुभृतनीलशाटिका ।।
राजमार्गमपहाय सत्पतिम् ,
कामुकीव परमन्यमग्रहीत् ।। २ ।।

सन्निलीय वलभीतलेषु सा ,
तिष्ठती पथि तथापि बिभ्यती ॥
[2]सत्वराजनिगमागमोहना -
देवमाप नृपयज्ञवाटिकाम् ।। ३ ।।

---

1—Mss. सोपधार्य नवनीलशाटिकाम् इति पाठः। (रा. प्र. ८--२)

2—Mss. "सुद्रुताजनसमागमैः क्वचिदेवमापनृयज्ञवाटिकाम्" इति पाठः।
(रा० प्र० ८--४)

किं करोमि कथयामि भूभुजे,
किन्न चेदिहा[1]मिलेत्तदात्मनि ।।
किं विधेयमिति संशयाकुले,
प्रादुरास कुतकी स राघवः ॥ ४ ॥

किं निशेयमिति [2]तामतर्कय -
द्वीक्ष्य वान्तरतडिच्छटाघटा,
किं तमोन्तरितकौमुदिः शशी,
[3]सोऽपि मां शरणमात्मनाऽऽगतः ॥ ५ ॥

[4]नीलपट्टमिदमस्ति नो घटा,
नाङ्गयष्टिरिति किं तडिल्लता ।।
आननं न विधुरेष पौर्णिमो -
द्यौरियं धृतवपुर्न भामिनी ।। ६ ॥

[5]किं सखीयमवनीभुवा मम,
प्रत्यया हि परिचेतुकामया ।।
किमथवा पतिंवरा कापि,
कस्य धरिणीभृतः सुता ।। ७ ।।

किं ममैव मनसोऽधिवृत्तयो -
ऽनुक्षणं स्फुरदिलात्मजा गुणाः ।।
ध्यायतो निशमुदैतदात्मना -
लोकवत्परिणत[6]विधेर्यथा ।। ८ ।।

---

1—मिलेत्स तद् हृदि इति पाठः। (रा० प्र० ८–५)

2—मम मुदे स्वरूपिणी इति पाठः। (रा० प्र० ८--६)

3—रुद्ध एष शरणं स मामितः इति पाठः। (रा. प्र. ८-६)

4—(रा० प्र० ८--७) 5—(रा० प्र० ८-९)

6— स्वयम्भुवः इति पाठः। (रा० प्र० ८–१०)

चारुलोचनयुगेन कामिनीं ,
तां विबुध्य स तदन्तिके भवन् ॥
कासि कस्य वद मे मनोऽधुनां -
दोलवृत्ति[1]रचने विधोरिव ॥ ९ ॥

विद्धि मां जनकजानुगामिनीम् ,
प्रेषितामपि तया भवत्कृते ॥
त्वद्गुणप्रथितमौक्तिकावलि -
[2]ग्रन्थनारचितयेत्युवाच तम् ॥ १० ॥

अन्तरन्तवत्तथा[3]गतेस्तया ,
ब्रूहि चेदिति कथां शृणुष्व तत् ॥
योऽन्य एव हृदि यस्य स प्रभो,
किं न भेदपतितं निजैस्सह ॥ ११ ॥

[4]पश्य राम हृदयं यथा निजम् ,
तन्मनोऽपि च तथैव निश्चिनु ॥
अस्ति तन्न च तथेति संशये ,
साक्षि चित्तमुभयोर्हि नापरम् ॥ १२ ॥

सत्यमेतदुदितं मया बुधा ,
जानते कथितमप्यलं गिरा ॥
एतदेव फलमुत्कटं धियो -
[5]लक्षणैर्यदपरेङ्गितोहनम् ॥ १३ ॥

---

1—Mss. 1, 2 (स्वने)

2—ग्रन्थनानुलवसक्तिरुद्धया इति पाठः। (रा० प्र० ८--१२)

3—स्थितेः 4—(रा० प्र० ८-१४)

5—लक्षणैरपरभाववेदनम् इति पाठः ।(रा० प्र० ८-१५)

त्वं [1]यतः प्रभृति गाधिजक्रतोः ,
सिद्धये तदटवीं समागमः[2] ॥
सा ततः प्रभृति पङ्कजेक्षणो -
न्मेषदृष्टि भ्रमरीव तिष्ठति ॥ १४ ॥

आगमिष्यति सरामलक्ष्मणः ,
कौशिकोऽपि रवमित्युदाहृतम् ॥
सा निशम्य मुदमेत्य[3]नूतनाम् ,
केकिनीव कुशला घनध्वनिम् ॥ १५ ॥

[4]कीदृशीति वदति प्रियस्वने ,
प्रत्यवोचदिदमुल्लसन्मुखीम् ॥
तं तदा कलरवागतक्लमा ,
भारती भवमिवोत्सवे क्वचित् ॥ १६ ॥

[5]तादृशी तु विधिना न निर्मिता ,
तद्विशेषणतया निदर्शयेत् ॥
कोऽपि [6]यां यदि विभाव्यते ,
शरत्कौमुदी किमपि गाहते मनः ॥ १७ ॥

कोमलं किसलयं[7] तु भूभुवो[8] ,
पल्लवप्रतिपरीक्ष्य वेधसा ॥
इत्युपेक्षितमनो हि गद्यते ,
पल्लवः प्रतिविभज्य वाक्यतः ॥ १८ ॥

---

1—(रा० प्र० ८-१६) 2—Mss. 1, 2 (समागतः)

3—मुमुदे मनस्विनी इति पाठः। (रा० प्र० ८–१८)

4—(रा० प्र० ८-२०) 5—(रा० प्र० ८-२१)

6—Mss. 1, 2 (तां)

7—लवोऽपि नी इति पाठातरम् 8—Mss. 1, 2 (भुवोत्पल्लव)

शाणशोधिततवेन्दु[1]सन्धितो -
त्पल्लवाग्रमरुणांशुमिश्रितम् ॥
स्याद्यदाब्जमपि तत्पदोपमाम् ,
सम्भवे सति विशेष्यमेव तत् ॥ १६ ॥

तौ [2]कुतोऽपि कथमप्यनुत्तमौ ,
संविधाय चरणावयाचत ॥
तद्गतिं स्वकलहंसशावत -
स्तां ततः किमपि भर्तु रभ्रभोः ॥ २० ॥

आद्रपादपदकावलोकनम् ,
छद्मवेदिषु पदार्पितद्रवा ॥
रुपसम्मर्दितनागसुभ्रु वाम् ,
साऽनुमूर्द्धंकुरुते पदाङ्कताम् ॥ २१ ॥

[3]जङ्घयोस्तुकदलीं चिकीर्षया ,
मध्यमं वरमपांनिधेर्भ्रमम् ॥
नाभिमुच्छुरितविद्रु मद्युतिम् ,
प्रार्थयतदुरसांकपट्टिकाम् ॥ २२ ॥

[4]रत्नसानुशिखरद्वयं सुधीः ,
संययाच इति तद्विमृश्य स ॥
अत्र कान्त कठिनं भविष्यति ,
पीनमुन्नतमुरोजयोर्यु गम् ॥ २३ ॥

---

1—"सन्धितं कर्णिकाग्रमरुणांशुमिश्रितम् ।" इति पाठान्तरम् ।
(रा० प्र० ८—२४)

2—(रा० प्र० ८--३१) 3—(रा० प्र० ८-३२)

4—(रा० प्र० ८-३३)

तेन तीरमुपसृत्य सामभि -
स्तं त्रिकालमुपतिष्ठता हरिम् ॥
क्षीरसागरमृणालमण्डल -
मभ्ययाचि [1]सुषमा भुजश्रिये ॥ २४ ॥

स त्रिरेखमकृताधिसौष्ठवम् ,
कण्ठमस्य तुलना जगत्त्रये ॥
[2]नोतदुद्विदधतोऽधरं विधे -
रुत्कनिष्टगलहस्त एव हि ॥ २५ ॥

[3]तत्कृते सकलहंसपोतकम् ,
कोकिलाश्रितरसालमञ्जरीम् ॥
तंत्रिकां निभृतपंचमध्वनि -
मभ्ययाचत यथावयोरवम् ॥ २६ ॥

विप्रकृष्टतरवस्तु संहतीः ,
संविविच्य विविधा विभाविते ॥
चित्रमत्र चिबुकेऽयते चिरम् ,
व्युन्नयन्निव चिरं चिरास [4]सः ॥ २७ ॥

[5]नासिके नलिननेत्रभूभुव -
स्तेन नव्यनलिके मनोभुवः ॥
निर्मिते त्वयि विमोक्तुमेकदा -
तत्कटाक्षनवनालिकद्वयम् ॥ २८ ॥

---

1—सुषमाऽनपायिनी... इति पाठांतरम् । (रा० प्र० ८-३७)
2—"नास्ति वा विदधतोऽधरं विधेरुत्कानिष्ट मलहस्त एव किम् ।" इति पाठान्तरम् । (रा० प्र० ८-४०)
3—(रा० प्र० ८-४१) 4—Mss. 1, 2 रासत इति पाठः ।
5—(रा० प्र० ७-४३)

[1]सालिनीलसितपद्मतद्दल -
क्रौञ्चखंजन मृगेन्द्रमाजुषाम् ॥
एकदत्र विजयाय वा यथा ,
सम्भवं नयनत्र्यग्रगौ भटौ ॥ २९ ॥

[2]रामनाम यदि कर्णगोचरम् ,
स्यात्तदैव तरले तदक्षिणी ॥
सम्भ्रमेहरिणशावनेत्रयोः -
पूर्वमेवरुचिमभ्यपेयतुः ॥ ३० ॥

[3]सोऽयमेवमिति कीर्तितेकया ,
ऽप्युन्मिषित्कमलकुड्मलोपमम् ॥
तत्तयोर्युगलमाश्वजिह्मपद् -
दष्टकीटचलखञ्जरीटयोः ॥ ३१ ॥

[4]नेक्षते सहचरीभिरुत्सवे पश्य -
पश्य किमिति प्रलोभिता ॥
ध्यायती तव मुखेन्दुचन्द्रिकाम् ,
सा चकोरनयनाचिरं स्थिता ॥ ३२ ॥

[5]ज्ञायते त्वयि निगूढभावना ,
त्वां सुषुप्तिविषयेऽपि पश्यति ॥
युक्तमस्त्यपरथा तथा सती ,
प्रस्फुरान्तरकनीनिका कथम् ॥ ३३ ॥

---

1—(रा० प्र० ८--४४) 2—(रा० प्र० ८--४५)
3 —(रा० प्र० ८--४७) 4—(रा० प्र० ८--५१)
5—(रा० प्र० ८--५०)

[1]उक्तिरित्यपि मनो विलीयते ,
तत्र वीरवर्युक्तिरीक्ष्यते ॥
अन्यथा यदि तथैव ते गुणान् ,
सोत्थितैव कथमाशु वर्णयेत् ॥ ३४ ॥

गोत्र संस्खलनतोऽपि ते [2]तदा ,
जाग्रतीव तव तत्र संस्मृतेः ॥
अस्ति चात्र नियतं मनो यतो -
नोभयं विलपिते तदीक्ष्यते ॥ ३५ ॥

[4]स्वप्नदृष्टभधदन्तरादिव ,
सोन्नयतत्य[5]तुलतच्छनैः शनैः ॥
[6]तारचारुरुचिभृज्जितोन्मिष -
दन्तरालचलभृङ्गपङ्कजम् ॥ ३६ ॥

[7]तद्भुवौ सुभुज नैव किन्तु ते ,
[8]कार्मुके नु रति पुष्पबाणयोः ॥
[9]अक्षिणी हन तु सन्धितौ शरौ ,
[10]स्वाजिराय दृगुपांत्य सत्फलौ ॥ ३७ ॥

---

1—(रा० प्र० ८--५१) 2—"गोत्रसंस्खलनतोऽपि वा जाग्रतीव खलु तत्र तेऽनिशम् ।" इति पाठान्तरम् । (रा० प्र० ८--५२)

3—(रा० प्र० ८–५३) 4—Mss. 2 ततूनैः शनैः इति पाठः ।

5—"कृष्णतार गतिमज्जितोन्मिषदन्तराल..." पाठान्तरम् (रा. प्र.८–५३

6—(रा० प्र० ८–५४) 7—"कार्मुके निर्मिते किमिति पुष्पबाणयोः ।" इति पाठान्तरम् । (रा० प्र० ८--५५) 8—1 2, (हन्त)

9—तत्र तीक्ष्णतदपांग संगतौ"" इति पाठान्तरम् ।

10—"तदलकावघस्तले संविजित्य शिशुनागिनीकुलम् । आश्रिताविव विवक्तुकामया कर्णमूलमधिपातचापलौ ।" इदि पाठान्तरम् । (रा. प्र.८-५५)

लम्बिनौ तदलकावुदाननौ ,
नागिनीविजयमीरितुं ध्रुवम् ॥
तद्रहस्यमिव वक्तुमाश्रितौ ,
कर्णमूलमधिपात- चापलौ ॥ ३८ ॥

[1]केवलं मुखसुगन्धिलोभिता -
ऽऽगच्छति भ्रमरपङ्क्तिरित्यलम् ॥
किन्तु तच्चिकुरमर्थितुं मिषा -
न्निर्जितात्मरुचिलब्धये पुनः ३९ ॥

ते स्वभावरुचिराः कुचव्रजा ,
ये धृता शिरसि विज्ञया तया ॥
[2]तिर्यचालमपि योऽपुरस्कृतम् -
चामरस्तदुपमेति को वदेत् ॥ ४० ॥

[3]रोद्धुमूर्धमुपसर्प्पतीमिव ,
तन्मुखस्य रुचिमैन्दवीं भ्रमात् ॥
केशवेशमिषतो द्विधा स्थिता -
स्ते निशीथतिमिरत्विषां गणाः ॥ ४१ ॥

[4]सापि तैरिपुरजित्समा भुज -
द्वन्द्व- निर्जित- मृणाल - मण्डला ॥
वाञ्छती करविलासतोऽप्युदन् -
मित्रसेविसरसीरुहां श्रियम् ॥ ४२ ॥

---

1—(रा० प्र० ८--५६)

2—"तीर्यंगैरपि च योऽपुरस्कृत" इति पाठान्तरम् । (रा० प्र० ८--५७)

3—(रा० प्र० ८--५८) 4—(रा० प्र० ८--६०)

सन्निशम्य विलसद्रथोद्धता ,
वृत्तसर्गरचनां स तद्गिरम् ॥
राघवोऽति मुदमाप सापि तम् ,
सम्विधाय सममीक्षणातिथिम् ॥ ४३ ॥

[1]सा तु तस्य प्रणिपत्य पादयो -
निर्ययौ निलयमात्मनो यथा ॥
आगता सपदि सोऽपि तां निशाम् ,
सन्निनाय शयने मनोरथैः ॥ ४४ ॥

[2]कीदृशं गिरि सुतेशकार्मुकम् ,
तस्य कीदृगपि षिञ्जनीगुणः ॥
एवमाविमृशतोऽरुणोदयो -
ऽभूद्वयोरिव पदार्थशालिनः ॥ ४५ ॥

दर्शनाय धनुषः कृताह्निकम् ,
तं प्रणम्य रविवर्चसं ततः ॥
तौ परानपि तथा तपोधनाँ -
स्तस्थतुः सदसितैः स सत्कृतौ ॥ ४६ ॥

[3]प्रेष्य वाचि पटुमर्चितेश्वरः :
संस्मृतर्षिवचनो नराधिपः ॥
अध्वरागत - नरेश्वरैस्सह ,
रामलक्ष्मणयुतं तमाह्वयत् ॥ ४७ ॥

---

1—(रा० प्र० ८--६२) 2—(रा० प्र० ८-६३)

3—(रा२ प्र० ८-६४)

[1]अद्य राम तव कामकान्तिजि -
ते समेत्य करमाशु तद्धनुः ।।
ऊचुरैशमपि भङ्गमेष्यति ,
नैशमन्धतमसं रवेरिव ।। ४८ ।।

[2]उक्तवत्स्विति तपोधनेषु ते-
ष्वाजगाम सचिवो महीपतेः ।।
रोधनाय निजनाथभाषितम् ,
धीमते मुनिवराय कार्य्यवित् ।। ४९ ।।

एतदुक्तमवनीभृता मुने !
[3]श्रूयतां विदितवेद्यभावतः ।।
त्वं पुनीहि रघुनन्दनन्दनान्वितः ,
पादशौचसलिलेन मे गृहम् ।। ५० ।।

तन्निशम्य विनयान्वितं वचः ,
प्रोक्तमिङ्गित- विदार्थवित्तमः ।।
आदिदेश गमनाय तौ सताम् ,
तेजसां निधिरलङ्घ्यशासनः ।। ५१ ।।

[4]ते पुरस्कृतमहर्षिराघवा -
निर्गता बहिरुपाश्रयां क्रतोः ।।
ब्रह्मविष्णुशशिभृत्पुरोगमा ,
रेजुरग्निनिलयात् सुरा इव ।। ५२ ।।

---

1—(रा० प्र० ८-६८) 2—(रा० प्र० ८-६९)

3—"श्रूयताममृतसंमिताक्षरम्" इति पाठान्तरम् । (रा० प्र० ८-७०)

4—(रा० प्र० ८-३७)

गच्छतोऽथ पथि तत्र सम्भृतम् ,
वारिणा घटमीक्षणातिथिम् ॥
कौशिकस्य वलसिद्धिसूचकम् ,
राम एव स पुरोऽप्यचीकरत् ॥ ५३ ॥

तेन ते नृपवरामुनीश्वरा ,
[1]भूतभावि भवतां विशेषवित् ॥
मेनिरे मुनिवरा नृपात्मजाम् ,
रामवामतनु - लब्धसंश्रयाम् ॥ ५४ ॥

[2]तत्र यद्यपि बिहारवाटिका -
लम्भिनस्तु बहवोऽपि सत्पथाः ॥
ते परीक्ष्य परितो विचक्रमम् ,
राजमार्गमभिगोपुरम् पुरा ॥ ५५ ॥

[3]आविदेहनगरान्निरन्तरा ,
रेजुरुन्नतरसाल - शाखिनः ॥
गच्छतामुभयतस्तमुत्सवे ,
स्थापिता इव दृढातपत्रिणः ॥ ५६ ॥

[4]तेषु राममवलोक्य सादरम् ,
ह्लेपितेभगतिमध्वगावलिः ॥
विस्मृतात्मनियतार्थकार्य्यता ,
तस्य सार्थमधिकार्थतोऽग्रहीत् ॥ ५७ ॥

---

1—"मुनीश्वरोऽसंशयं सपदि सत्यवादिनः" इति पाठान्तरम् ।
(रा. प्र. ८-७४)

2—(र० प्र० ८-७७) 3—(रा० प्र० ८--७८)

4—(रा० प्र० ८--८६)

वारितापि बहुशोऽग्रयायिभिः
वेत्रवद्भिरपि वेपिता मनाक् ॥
नायिकापि परकाऽऽपि सा तया ,
यत्र कुत्र पथि [1]चित्रमित्रता ॥ ५८ ॥

[2]कोकिलः स्वरमुदात्तमुद्वह -
न्नग्रतोऽनुपदकं तदध्वनि ॥
तस्थिवानधिगताम्रमञ्जरी ,
मङ्गलार्थमिव सामगायनः ॥ ५९ ॥

आशुगोऽप्यखिलवस्तुशोषको -
ऽप्येष भव्यमुपलभ्य तत्पदम् ॥
प्रीणनात्तदनुगच्छतां जगत् ,
प्राणइत्युपदधे किलाभिधाम् ॥ ६० ॥

तत्र तं समवलोकितं छला -
दुन्मिषत्सुमनसामनेकशः ॥
संविधाय नयनानि वीरुधो -
ऽप्यारुहनन्नु नगं यथा घनाः ॥ ६१ ॥

[3]तस्य संकलयतः पदावलि -
रुल्ललास मिथिलोपमप्रभा ॥
अन्तरन्तरितपान्थलोचना ,
चिन्तितेव तडितां चमत्कृतिः ॥ ६२ ॥

---

1—"तयेति शेषः" इति काव्यकारस्य टिप्पणी (रा० प्र० ८-८०)

2—(रा० प्र० ८--८२)

3— (रा. प्र. ८-८६)

[1]तत्पुरोधिरुचिजालमद्भुतम् ,
नैकरूपमवलोकितं दृशा ॥
शक्यतेस्म समये शुचौ स्फुरद् ,
भानवीयमिव मण्डलं त्विषाम् ॥ ६३ ॥

[2]यत्र नील मणिसद्मरोचिषाम् ,
छद्मतोऽवनिपतेरवीवसत् ॥
वासरेऽभिरविमन्वहं तम -
स्तद्विकाशविपुलीभवत्तमम् ॥ ६४ ॥

[3]यत्रकान्तमभिनान्तरीयका ,
हन्त रेजुरवनेर्हंसा इव ॥
सौरताः स्फटिकनिर्मिता गृहा -
श्चन्द्रभित्तविनिमित्तभित्तयः ॥ ६५ ॥

[4]साभिमानमभिसायमुर्वसी -
शूलीशैलमधिरोहतीं कलाम् ॥
आरुरुक्षु रबलाजनोऽजय -
च्छत्रवज्रकृतहर्म्यशेखरात् ॥ ६६ ॥

तामवाप सु[5]शनैः सुरक्षिताम् ,
भूभुजा परजिताऽपरक्षिताम् ॥
तेप्यगुः सममनेकशोभिताम् ,
शम्भुशैलसमसौध- शोभिताम् ॥ ६७ ॥

---

1—(रा० प्र० ८–८७) 2—(रा० प्र० ८-९०)

3—(रा० प्र० ८-९१) 4—(रा० प्र० ८-९२)

5—जनकेन रक्षिताम् इति पाठान्तर (रा० प्र० ८–९४)

तस्थुरेत्यतदुपांत्यकाननम् ,
सक्षणाः क्षणमुदीक्षणोत्सुकाः ॥
ते विहारसरसि सरोरुह -
स्पर्शनक्षपित वर्तिनीश्रमाः ॥ ६८ ॥

राघवे तदटवीं तदीक्षितुम् ,
पातितं समनुपृच्छ्य सानुजे ॥
आजगाम जनको महीपतिः ,
सावधानमनसो मुनेः पुरः ॥ ६९ ॥

[1]पुष्पितोप्यधिकमत्र चम्पक -
श्चञ्चरीकचरितात्पराङ्मुखः ॥
नैव भात्यनुजभूषणाञ्चितो -
ऽप्यर्थिसार्थविमुखो यथाधनी ॥ ७० ॥

सौरभाणि सततं समर्पय -
न्नध्वगालिषु [2]बिभाति सौरभः ॥
याचकेष्विव धनानि नव्यरुक् ,
सभ्य इभ्य इव भाव्यभावनः ॥ ७१ ॥

[3]इत्थमत्र सुपत्रशोभिता -
ऽनुजलजां लतां विलोक्यताम् ॥
नमतीव विलोक्य विभ्यती ,
करयोगात्कुलजेव कन्यका ॥ ७२ ॥

---

1—(रा० प्र० ८--९७)

2—रसाल भूरुहः इति पाठान्तर —(रा० प्र० ८--९९)

3—(रा० प्र० ८--१०१)

इति निशम्य तयोर्गदितं मिथो -
मुदमवाप परं मिथिलाधिपः ॥
[1]सरसमाह मुनेर्धनुरीक्षय -
सपदि गच्छ पुरीं सफली कुरु ॥ ७३ ॥

[2]तौ शारदेन्दुवदनौ कमलायताक्षौ ,
कोदण्डवीक्षणविशेषविलोलचित्तौ ॥
अङ्के विधाय विगतोदितवाक्यशङ्के ,
हृष्यन् द्विजोऽथ स पुराभिमुखो बभूव ॥ ७४ ॥

[3]बहिः पुरद्वारमुपस्थितानाम् ,
समीक्ष्य रामं सकलाभिरामम् ॥
समेतु सीतामयमित्यभूद् वाक् -
पुरप्रवेशावसरे जनानाम् ॥ ७५ ॥

पुरैवादिष्टानां [4]परिणमयतां तद्गुणतया ,
हृदा वादो माभूदिति [6]मृगदृशामेति स इह ॥
प्रवेशात्प्रागेव प्रतिपदमशेषापि नयनै -
र्नवोढानामासीत्कमलितगवाक्षेव मिथिला ॥ ७६ ॥

---

1—स पुनराह इति पाठान्तर (रा० प्र० ८--१०६)

2—(रा० प्र० ८—१०७)

3—(रा० प्र० ८--१०८)

4—मिव परिणति इति पाठान्तर (रा० प्र० ८--१०९)

5—नयनयौः पाठान्तर (रा. प्र. ८-१०९)

सीतानर्मसखी रघूत्तमवचो राजागमाद्युल्लसत् -
दुर्गादत्तसुशर्मपानकवरीपुत्रस्य तीर्थे कुरोः ॥
सर्गः श्रीरणवीरसिंहविभुनादिष्टस्य संवासिन -
श्चण्डीदासकवेः कृतावुपगतः पूर्ति च षष्ठोप्ययम् ॥ ७७ ॥



श्रीमन्महाराजाधिराज- जम्बू-काश्मीराद्यनेकदेशाधीश
श्रीरणवीरसिंहवर्मादिष्ट- श्रीकुरुक्षेत्र-मध्यरेखाँतर्गत
पुण्डरीकपुरप्रसिद्ध - सवालवंशावतंस
श्रीदुर्गादत्तात्मजनव्यचण्डीदासकविकृतौ
"रघुनाथगुणोदये" महाकाव्ये
श्रीरामगुणवर्णनो नाम षष्ठः सर्गः ॥ ६ ॥

———

ॐ

श्री रघुनाथगुणोदय- महाकाव्ये

# सप्तमः सर्गः

श्री

सन्मङ्गलध्वनिभिरग्रजमग्रजस्तम् ,
कृत्वा समेत[1]मनपेतधनुः शराभ्याम् ।।
ताभ्यां विवेश वसुधाधिपतिः स तस्या -
मश्यान- चन्दन- समाहृतसारवीथ्याम् ॥ १ ।।

[2]तस्मिन्नुपेयुषितयोरथरामनाम्नि ,
सौन्दर्यधाम्नि नरराजपथं पुरस्तात् ।।
वृष्टिः पपात परितोऽब्जदृशां दृशाखा -
दाकस्मिकीव विकचन्नव-नीरजानाम् ।। २ ।।

[3]तासां न केवलमुदारविलोचनानाम् ,
नेत्राणि तत्र विनिपेतुरुदाश्रितानाम् ।।
अप्युन्मनांसि पुनरागमनाय साकम् ,
तैरुन्नतात्पतनमास्थितये गुरोर्हि ॥ ३ ।।

---

1—"ऋषिभिश्च धनुश्शराभ्याम्" इति पाठान्तरम् (रा० प्र० ६-१) ।



2—(रा० प्र० ६-२) 3—(रा० प्र० ६-३)

[1]कस्यास्तदब्धनिकषानिलरन्ध्रगायाः ,
प्रत्यङ्ग- सौष्ठवमुदीक्षितुमुत्सुकायाः ॥
विम्बानुरागमुषितस्त्वनुमन्त्र्य दृग्भ्याम् ,
तस्याधरत्विषि तदान्तरयाम्बभूव ॥ ४ ॥

[2]आगण्डमण्डलविलम्बितकुण्डलस्य ,
मध्ये विलम्बिलुलितालककान्तिजाले ॥
कालेन कापि कलयाऽऽकलिते कयाचित् ,
स्वे कुन्तले रुचिमपोह्य ववन्ध तस्य ॥ ५ ॥

[3]कस्यास्तु साञ्जनदृशोर्युगलं विलोलम् ,
चोलं चलन्तमविलम्बितमस्मरन्त्याः ॥
तस्या[4]स्य कांत्यजिरमाश्रयितं तदानी -
मुड्डीनयोः क्षुधितखञ्जनयोरिवासीत् ॥ ६ ॥

[5]उन्मेषणं किमपि तस्य मुखारविन्दम् ,
कान्तं तदाधिपिबतोऽधिकवांछयैव ॥
एकं दृशोऽधितृषितस्य जनस्य चान्यम् ,
तूद्गारमुद्धृतमुदारमिवापरस्याः ॥ ७ ॥

बन्धूनिति स्तिमितपङ्कजयोः रुचीणा -
मक्षीणि [6]मुद्भरपरानि हतत्रपाणाम् ॥
कासां तदाप दयितस्य विशेषभासाम् ,
लालाटकीं श्रियमभीक्षणमभ्युपेयुः ॥ ८ ॥

---

1—(रा० प्र० ९--४) 2—(रा० प्र० ९--८)
3—(रा० प्र० ९--९)
4—तस्याननश्रियमुपात्तुमलं तदानीम् इति पाठांतरम् । (रा० प्र० ९-९)
5—(रा० प्र० ९--१०)
6—"मुद्भरतूणीकृतसत्रपाणाम्" इति पाठान्तरम् । (रा० प्र० ९--१२)

तस्यावलोक्य चिकुरान्मुकुरं सुकेशी ,
स्वांगुष्ठभूषणसमर्प्पितमुल्लसन्तम् ॥
अध्यात्मसम्भवदनन्तरवीक्षणेच्छा ,
[1]कापीक्षणान्तरभिया न तदा ददर्श ॥ ९ ॥

[2]सुभ्रूः स्वकुन्तलजितोरगराजसुभ्रू -
स्तद्भ्रुयुगं जितमनोज- सकार्मुक-भ्रूः ॥
काप्यैव वीक्ष्य नमनात् स्वतयोर्नतभ्रूः ,
संज्ञां दधाविति न कित्वपरा नतभ्रूः ॥ १० ॥

[3]मन्दस्मितोल्लसदनन्तरदन्तरोचिः ,
सन्वीतमित्युदितवत्यपरास्य पश्य !
बिम्बाधरेऽधरमसावधरीकरोति ,
मुक्तावलि-कलित-विद्रुम-बद्ध-लेखाम् ॥ ११ ॥

[4]गत्या सहस्खलदलं प्रतिपादधृत्या ,
तिष्ठत्वलङ्घितपदं रघुनन्दनस्य ॥
काचिन्मनोऽनुगमनागमयोस्तदानीम् ,
दोलायमानमबला न शशाक रोद्धुम् ॥ १२ ॥

[5]एकं धयन्तमवलम्बितमग्रजातम् ,
गृह्णन्तमप्यतितरामपरं करेण ॥
लब्धं चिरेण तनयं स्तनमुद्विहाय ,
स्तन्यैन कानुपदसिञ्चितभूरियाय ॥ १३ ॥

---

1—"तैरीक्षणान्तर भिया न ददर्श काचित्" इति पाठान्तरम् ।
2—(रा. प्र, ६-१४) 3—(रा० प्र० ६-१५)
4—(रा० प्र० ६-१६) 5—(रा. प्र. ६-२०)

[1]तिष्ठन्तमन्यमवलम्ब्य पदं तदन्य -
द्रुद्धं तदङ्कमपि सा हसते रुरुक्षुम् ॥
सम्भर्त्सयन्त्यपि विहस्य पथि स्खलन्ती,
तद्वेदनामगणयन्त्यभि तं तथा स्यात् ॥ १४ ॥

[2]लज्जीकृतैणकुलमञ्जितुमञ्जनेन ,
खञ्जीविधातुमिव खञ्जनयुग्ममेकम् ॥
नेत्रं निगृह्य पृषतीमपि सम्प्रवृत्ता ,
वृत्तानि वीक्ष्य स हिताऽऽशुतया जगाम ॥ १५ ॥

पीनोन्नतं दृढमुरोजयुगं नु कस्या -
स्तस्येक्षणाय परिधावनतत्परायाः ॥
नाकम्पतान्तरविवर्तिषु सार्थकेषु ,
धीरो रणेष्विव भटद्वयमेकवृत्तम् ॥ १६ ॥

उद्भेत्तुमम्बरमिवाम्बरमुत्क्षिपन्त -
मप्याहि[3]तं स करपल्लव[4]बन्धनेन ॥
वक्षोजयोः पथिगतैरपरा तदानीम् ,
द्वन्द्वं वहन्त्यप[5]जहार सतां मनांसि ॥ १७ ॥

[6]सम्पादयन्त्यनुपदोद्धरणं विशेष -
विस्तारगौरवभृतोर्भरसालसाङ्गी ॥
मध्ये नितम्बकुचयोरियमस्ति किम्वा ,
नास्तीति संशयमुदारधियां मनस्सु ॥ १८ ॥

---

1—(रा. प्र. ६-२१) 2—(रा० प्र० ६-२२)

3—संक्षेपितम् इति पाठान्तरम् ।

4—उग्रबन्धैः इति पाठांतरम् । (रा० प्र० ६-३०)

5—"अनुहरन्त्यपि सन्मनांसि" इति पाठांतरम् । (रा० प्र० ६-३०)

6—(रा० प्र० ६-३१)

[1]इत्थं विलोक्य विविधा वरवर्णिनीनाम् ,
लीलाश्चिरन्तनमुनेरपि कर्षयन्ती ॥
चेतोऽचिरांशुरुचिजित्सु चलत्कटाक्ष ,
प्रेक्षाजुषां जगदुरेव मिथः युवानः ॥ १९ ॥

एषा वयस्य परिवेश इव स्मरस्य ,
कान्ताकृतेर्ऽथितरुचां विधिनाऽनुपश्य ॥
सर्वं वशे प्रणयतीह मनोभवस्या ,
प्यस्याः भवेदिह जनो वद कोऽप्यवश्यः ॥ २० ॥

[2]एषा परा पुलकितानि वपूंषि यूनाम् ,
कुर्वन्त्यनून विभवासुरसुन्दरीभ्यः ॥
मूर्तेव मित्रमुदितोदितमन्त्रविद्या -
मश्नाति मन्थरगतैर्न मनांसि केषाम् ॥ २१ ॥

अस्या विलोचनयुगं लुलितालकाग्रम् ,
कोणे करोति कृपयैव निरीक्षकाणाम् ॥
नो चेन्मनागपि निपातनमप्रगल्भो -
भूयाज्जनोऽयमुरुनिष्कृतयेऽबलापि ॥ २२ ॥

एवं तदायुवपु सोऽपि परस्परेण ,
सुभ्रूजनानुगुण- गौरवमुक्तवत्सु ॥
लोकोत्तरोदयमनिर्वचनीयकान्तिः ,
शान्तिस्वनिष्ठिततमेव पुरोऽघ्यतिष्ठत् ॥ २३ ॥

---

1—(रा. प्र. ६-३३)
2—(रा० प्र० ६–३५)
3—(रा० प्र० ६--३६)
4—(रा० प्र० ६--३७)

[1]तस्मिन्नलौकिक- कलोल्लसदङ्गसम्पत् ,
पक्षीकृताखिलजनात्मनि सत्त्वधाम्नि ॥
चक्षूंषि तत्र सममेव मनांसि तेषा ,
मुच्चावचाः खल इवाभ्यपतन्कपोताः ॥ २४ ॥

वृद्धा विलोक्य [2]विधयोह्यत पद्मनाभम् ,
तं पुण्डरीकनयनं नवनीरदाभम् ॥
भक्तार्तिहारिप्रणामद्भुतशार्ङ्गपाणि -
रित्यूचुरेष[3]तरुणीभिरिदं त्वभाणि ॥ २५ ॥

सत्यं स एव समनोगिरगोचरश्रीः ।
सा श्रीरियं जनकजा न वचो मृषोद्यम् ॥
[4]चेदन्यथा शशिभृतोऽस्य शरासनस्य ,
[5]ज्यारोपणोत्थितमतिर्न कदा शिशुःस्यात् ॥ २६ ॥

किंवा त्वदुक्तमिदमुत्सुकया विवक्तुम् ,
श्रद्धीयते [6]सखी मया नु च संश्रृणुध्वम् ॥
सीता मुदे धृतशिशुत्वमवैहि सोऽपि,
केलिकरग्रहविधिः समयोः सुखाय ॥ २७ ॥

---

1—(रा० प्र० ६--३८)

2—"वनितागत" इति पाठान्तरम् ६-४१ ।

3—"धरिणीतनयोपलब्ध्यै" इति पाठान्तरम् ६--४१

4—"नैवान्यथा" इति पाठान्तरम् ।

5—"सज्जीविधानमथचालनमद्रनम्यम्" इति पाठान्तरम् ।
(रा० प्र० ६--४२)

6—"न च मया सखि संश्रृणुष्व, मोदाय सोऽवनिभुवोऽपि हि बालकोऽभूत्,
केलिः करग्रहविधिः समयः सुखाय" इति पाठान्तरम् ।



(रा० प्र० ६--४३)

[1]पथ्यं न चेद्भवति कस्य कदापि तथ्यम् ,
नो त्वादृशीवचनमस्मादपि वच्मि किंचित् ॥
किं किं न कारयति कारणबन्धहीनम् ,
प्राक्प्रेम कुत्र गतयोरुभयोरुभाभ्याम् ॥ २८ ॥

[2]उक्तं तु यद्यपि परं तव यौक्तिकं हि ,
सिद्धे तथापि किमनेन तथाविधस्य ॥
बाल्यात् परं यदुभयस्य सुखं रुरुक्षो-
रन्योन्यवीक्षणभवं परमप्रमेयम् ॥ २९ ॥

[4]काप्याह युक्तमपि केवलवीक्षणात्किम् ,
पारस्पराणि सुरतद्विगुणीकृतानि ॥
आरूढ- यौवन - जनोऽनुभवन्सुखानि ,
जानाति नो दिन-निशोस्तु गतागतानि ॥ ३० ॥

सस्मेरमम्बुजमुखी त्वपरा वयस्या -
स्त्युक्ता तथेति परमुत्तरयाञ्चकार ॥
तेनैव तान्यपि वरोरु सहेतुकानि ,
[4]नो विस्मरन्त्यगुनिदानमपि कृतज्ञाः ॥ ३१ ॥

[5]वक्रोक्तिगुम्फितगुणाः सरसा सभावा -
स्तत्राधिकान्तिकमनीयतराः सुवर्णाः ॥
तासान्तु ता इव सुखाय सरीतयोऽपि ,
वाचो विचित्रपदसङ्गतिका बभूवुः ॥ ३२ ॥

---

1—(रा. प्र. ६-४४) 2—(रा० प्र० ६--४५)
3—(र० प्र० ६-४६)
4—"नो विस्मरन्ति न विदोऽप्यनुमाद्यहेतुम् (रा० प्र० ६--४७)
5—(रा० प्र० ६-४८)

[1]एह्येहि पश्य परिणेतुमुपागतस्त्वाम् ,
सीतावरोऽपि नहि हे परिणेष्यति त्वाम् ॥
एवंविधैरवगतार्थपदं तदैनम् ,
कन्याकुलं कलरवं कलयाञ्चकार ॥ ३३ ॥

[2]वातायनस्थितपुरन्ध्रिसमीरितानि ,
सीताप्तिसूचकपदानि च सोऽनुवीथि ॥
बाला वचांसि बहुशो हृदयङ्गमानि ,
शृण्वन्नवाप नरराजसभानिकेतम् ॥ ३४ ॥

रामं विलोक्य धनुरीक्षणमात्रकामम् ,
स्वानेतुमुग्रमुनिनानुमतस्सदैव ॥
योधांस्ततोधिकबलान्सुबहून्विशिष्टा-
[3]न्राजाऽदिदेश धनुरानयनाय मङ्क्षुः ॥ ३५ ॥

तैर्यत्नवद्भिरपि [4]दीर्घभुजैरनेकं -
र्नीतां परैर्गुरुनिपातभयादुपात्ताम् ॥
भूमीश्वरः विपुलवज्रपिधानयुक्ताम् ,
तां सत्यदीधिपदगण्य शिरोऽधिरूढाम् ॥ ३६ ॥

विज्ञाप्यतां सविनयं मुनये मनस्वी ,
[5]तेनादृतो बहुमतश्च ततो परेषाम् ॥
तेषां पुरः सपदि दृष्टचरीं च येषाम् ,
तत्राऽऽहितां समुद्घाटयदुद्भटैस्ताम् ॥ ३७ ॥

---

1—(रा० प्र० १--४६) 2—(रा० प्र० ६-५०)

3—"आकारयामनुबभूव महीमहेंद्रः" इति पाठान्तरम् । (रा० प्र० ६--५२)

4 —"पञ्चसहस्रसंख्यैरन्यैश्च तदगुरुनिपातभयादुपेताम् ।
सम्पद्धरो विशदवज्रपिधानयुक्तां तां सत्यदीधिपदगण्यशिरोधिरूढाम् ।"
इति पाठान्तरम् । (रा० प्र० ६-५६)

5—"राजा स तेन गुरुणानुमतो नयज्ञः । तेषां पुरोऽवनिभुजामपि पूर्वदृष्टा
तत्राहितां समुद्घाटयदुद्भटैस्ताम् ।" इति पाठान्तरम् (रा० प्र० ६--५७)

[1]येषां तु दृष्टचरमेव मनस्सु तेषाम् ,
यानि तृणानि तदवबुद्धरणोद्भवानि ॥
भूयो निरावृत्तिरसौ त्वगुदञ्चनं हि ,
तेषां तदा द्विगुणितायतये बभूव ॥ ३८ ॥

[2]यैरन्तरेण रघुवीरमनन्तवीर्य्यम् ,
धैर्यङ्कषं धृतिमतामपि नेक्षितं तत् ॥
तेषां मनोधिबलचालनतोऽधिलोलाम् ,
दोलां तदाऽत्वकृत तत्र गमागमाभ्याम् ॥ ३९ ॥

तद्भूमिपालनिवहस्य च तस्य चेतो -
वृत्तिक्रमोत्समनुवृत्त्यभिवर्तनाभ्याम् ॥
एकार्थिकापि पलभा प्रतिरूपिकेव ,
पूर्वापराह्णविषया विभिदे तदानीम् ॥ ४० ॥

[3]स प्रेरितोऽपि मुहुरास्फुरता भुजेन ,
वामेतरेण नयनेन च वीक्षणाय ॥
तत्र स्पृहालुरपि तद्वचनाभिलाषी ,
नैवोदतिष्ठदुपदिष्टतयापि शक्तः ॥ ४१ ॥

रामं विलोक्य मुदितं हृदयं नृपस्य ,
कामप्रभं मृदुलबाहुकरं धनुश्च ॥
वज्रोपमं मलिनरोचिरभूदिवाब्जम् ,
[4]तत्राम्बुदान्तर्बहिः प्रतियाति भानौ ॥ ४२ ॥

---

1—(रा० प्र० ९–५८) 2—(रा० प्र० १-६६)
3—(रा० प्र० ९--६८)
4—"पाथोधरान्तर्बहिः प्रतियाति भानो" इति पाठांतरम् (रा प्र. ९-५९)

उत्तिष्ठ राम सुविधेहि तदा समक्षम्,
पश्यन्नरेशवदनद्युतिमित्युवाच ॥
[1]स्वाभाविकोक्तिविषयां स यथा मदुक्तिम्,
नत्वप्यसावतिशयोक्तिमिव प्रतीयात् ॥ ४३ ॥

[2]इत्युक्त एव मुनिना सह सोदतिष्ठत्,
सिंहासनात् स शिशुरप्यविरलाधिसत्त्वः ॥
सत्त्वागमध्वनिवशात् क्षुधितः सुमेरोः,
शृङ्गाद्यथोरुगति - रुग्रमृगेन्द्रशावः ॥ ४४ ॥

तं द्रष्टुमागतवतां द्युषदां विमानै -
र्व्यानैकबद्धमनसामुरुभाविमानैः ॥
गानैरनन्तमपि संकुलमाऽऽविमानै -
स्तानैस्तदा स यमितार्थममावितानैः ॥ ४५ ॥

[3]उत्तिष्ठमानमवलोक्य विलोकनीयम्,
तं तत्र वामनयनावलि[4]रित्यवादीत् ॥
अल्पीकृतोरुगिरिसारमिदं धनुः क,
कायं शिशुः सरसबालमृणालबाहुः ॥ ४६ ॥

[5]तत्रैव मुक्तवति राजवधुसमूहे,
व्यूहे न किञ्चिदपि कर्तुमुदञ्चितस्य ॥
विष्णोर्विशेषवति तस्य पुरोधियोग -
मायेव सा जनकजाधिगवाक्ष[6]मासीत् ॥ ४७ ॥

---

1—"स्वाभाविकोक्तिविषयं न वचो यथा मे।" इति पाठान्तरम्। (रा० प्र० ९-७१) 2—(रा० प्र० ९-७२) 3—(रा० प्र० ९-७३)
4—"वामनयनामिकरोप्यवादीत्" इति पाठान्तरम् (रा० प्र० ९-७२)।
5—(रा० प्र० ९-७३)
6—"गवाक्षमागात्..." इति पाठान्तरम्। (रा० प्र० ९-७३)

[1]सोऽप्युत्थितोऽभिनिजमारुतरन्ध्रयाताम् ,
सीतां सरोजनयनां नवनीरजाक्षः ।।
ज्ञातागमावधिदिनां दिवमारुरुक्षु -
र्दैत्यालयाद्धरिरिवाब्धिसुतां ददर्श ।। ४८ ।।

[2]यान्त्येव लोचनपथं धनुरुत्तरीयम् ,
हस्ते गृहीतमपि तत्कटिबन्धनाय ॥
व्यस्मारयत्तमलमासमहर्षिवाक्यम् ,
सा मोहिनीव मुरुभित्प्रक्रमहेशम् ।। ४९ ।।

[3]शुद्धेन्द्रनीलमणिसंस्कृतपद्मराग -
प्रत्युद्गमा इव सरोरुहराजिरम्याः ॥
अन्योऽन्ययोर्नयनयोरुचिभिस्तदस्याः ,
कान्तिच्छटा वियति सम्वलिता विरेजुः ।। ५० ।।

[4]तस्यात्मनि क्षितिसुतात्मतया परस्य ,
पुंसोऽपि याति परिणाममिवापि तस्याः ॥
तत्त्वेन तैः विदुरुपांत्यजनस्तदेत्थम् ,
योगोऽनयोः प्रकृतिसिद्धमिहापरैः किम् ।। ५१ ॥

स्यूतामिवाक्षियुगलेन परस्परेण ,
रुद्धामिवालमनुलोम - विलोमगत्या ।।
रश्मिष्विवात्मदृश[5]मास्यमभि[6]द्रवन्ती -
मादाय सोऽन्वपरिवर्तयदाश्विनीं च ।। ५३ ।।

---

1—(रा. प्र. १-७५) 2—(रा० प्र० ९-७६)
3—(रा० प्र० ९-७८) 4—(रा. प्र. ९-७९)
5—"मास्यमुपास्य यान्ती..." इति पाठान्तरम् ।

6—"पिबन्ती तदिति शेषः" काव्यकारस्य टिप्पणी ।

भूयो विलम्बित - मुदस्य तदुत्तरीयम् ,
स्वीयं समाहितमनाः कटिमाबबन्ध ॥
नो केवलां अपितु पक्षविपक्षयोर्हि -
[1]चित्ते निजेऽपि बहुदुःसहवाच्यबन्धम् ॥ ५३ ॥

जानन्त्यपि प्रथितमप्रतिमं तदीयम् ,
बाह्वोर्बलं [2]प्रकृतितोऽप्यनुभूतपूर्वम् ॥
[3]क्वाप्युद्भवेद्यपि सा [4]सरसेत्यवादीत् ,
क्वासौ तथाप्यहह तातपणः क्व चासौ ॥ ५४ ॥

[5]तस्मिँस्तदैव वचनेऽवनिजानिरुक्ते ,
युक्ते मनागपि गते श्रुतिरन्ध्रदेशे ॥
हावैस्सह प्रतिपदार्पित- गूढभावे ,
तस्मात् पदात्परिकरङ्कुलयँश्चचाल ॥ ५५ ॥

[6]गच्छँस्ततोऽनुपदमच्छकटाक्षकाली -
नालीकलक्ष्य - गति- पद्धतिमाससाद ॥
तासां मनोभ्रमशमाय शनैश्शनैस्सो -
प्यानन्दमन्थरगतैर्न भियायुधस्य ॥ ५६ ॥

---

1—"चित्ते निधातुमपहातुमुवाच्य वंध्याम्" (रा० प्र० ६--८१)

2—"जनकजाप्यनुभूतपूर्वं" इति पाठान्तरम् ।

3—"उत्कृष्ट जन्मनि लक्ष्मी रूपे, काव्यकारस्य टिप्पणी ।

4—"यदपि संश्रितलोकयात्रा" इति पाठान्तरम् । (रा० प्र० ६--८२)

5—(रा० प्र० ६--८४) 6—(रा० प्र० ६--८५)

[1]तस्मिन्नुपेयुषि ततस्तदुपान्त्यभूमिम् ,
भूमीश्वराद्भ्यरुषोः स्मयशोभयोश्च ॥
केचित्तदाधिकरणत्वमुपेयिवांसः ,
केचित्कुलायतदृशश्च हृदेदमूचुः ॥ ५७ ॥

साम्यं विलोक्य सकलोऽपि पुरन्ध्रिवर्गो ,
वाक्यैरमीभिरुभयोरपि योजयन् सः ॥
पुण्येन कस्य तव वा जनकस्य कस्य ,
सीतेऽस्त्वधीज्यममुनैतदथैतु भङ्गम् ॥ ५८ ॥

एवं जने वदति तत्र मदोद्धतानाम् ,
भूमिभृतां सह मनोभिरनोभियां यत् ॥
वामे [2]करे स [3]तदलक्षितलाघवोऽसौ ,
कृत्वा कसेरुतृणवद्धनुराभभञ्ज ॥ ५९ ॥

द्यावाधरान्तरमनन्तरवत् समन्तात् ,
[4]कुर्वन्निपातयितुमाशुतरां ससर्प्य ॥
तावद्धतिस्तु [5]परिविस्खलतः स तस्य -
लङ्केशचित्तगृहभित्तिमदोपलेपान् ॥ ६० ॥

वृन्दारकाः सपदि संसदि पुष्पवृन्दै ,
मेन्दारजैरथपुरन्दर - सृष्टिपूर्वैः ॥
दिव्याङ्गनाकरसरोरुहकान्तिमिश्रैः ,
[6]सर्वे तदापरमुदा समवाकिरँस्तम् ॥ ६१ ॥

---

1—(रा० प्र० ९–८७) 2—करेण.
3—"तदलक्षितलाघवेन" (रा० प्र० ९-८८) 4—"कुर्वन्निवाधिकतरं-तरसा विसर्पी। 5—"वृषभध्वजलब्धसिद्धि लंकेशसंश्रितनिकेतमपानयत्सः" (रा० प्र० ९–९०)
6—"प्रीतास्तदा पर मुदारमवाकिरंस्तम्" (रा० प्र० ९-८९)

पौरन्दरीप्रमुखदिव्यवधू - विमुक्त -
मन्दार- मेदुर - मरन्दमिलन्मिलिन्दैः ॥
[1]झङ्कारमङ्गलरवो विशदो व्यधायि,
तौर्यत्रिकैरिव पुरानुसृदो नृपस्य ॥ ६२ ॥

[2]गुञ्जारवैर्मधुलिहामनुधावतीना -
मेणीदृशामुपरि सन्ततशिञ्जितैश्च ॥
मञ्जीर- मर्दल- [3]मृदङ्ग- मनोहरैस्तै -
रैन्द्रं महोऽपि महदन्तरकारिसाङ्गम् ॥ ६३ ॥

[4]तद्भञ्जनेन परिरञ्जितचित्तवृत्ते -
रानन्दथुर्मनसि योऽभवदप्रमेयः ॥
राज्ञोऽनवन्नपि तदा स तथा परेषा -
मालोच्य कोऽन्य इति तत्क्रमेऽन्वयोध्याम् ॥६४॥

भग्नं विलोक्य सकलोऽपि जनस्तदानी -
मानन्दमाप धनुरप्यधिकं कठोरम् ॥
सीता हि तं तदपि तस्य तदाधितस्थौ,
चित्रार्पितेव करयुग्ममवेक्षमाणा ॥ ६५ ॥

तां तत्सखिस्मितमुखीति [5]तदेञ्जितज्ञा,
प्रोवाच चारुचरितेऽचिरमेतदेव ॥
सीते शिरीषकुसुमादपि कोमलं स -
द्भंगेन चास्य किमु तद्भविता त्वदङ्गे ॥ ६६ ॥

---

1—झंकार मंगल रवोऽलवं व्यधायि (रा० प्र० ९-९१)

2—(रा० प्र० ९-९२)

3—Mss. 1 मृदंगद इति पाठः

4—(रा० प्र० ९-९४)

5—Mss. 1, 2 (तदेङ्गितज्ञा)

[1]भग्नं यदीश्वरधनुर्ध्वनिना विलग्ने ,
लग्नं तदेव तु तयोः करपीडनस्य ॥
जातं हि तत्तु मुनिवर्य्यं तथा विधेहि ,
नस्याद्यथाजनकथा स तमित्युवाच ॥ ६७ ॥

[2]श्रुत्वा वचो विशदवर्णमुदीर्णरागम् ,
राज्ञो मुनिस्तमवदीद्वदतां वरिष्ठः ॥
तूर्णं त्वया दशरथः प्रतिबोधनीयः ,
रामस्य सम्प्रति करग्रहणोत्सवाय ॥ ६८ ॥

[3]निश्चित्य तावदुभयोः करपीडनस्य ,
सद्वासरं गमय गौरवयुक्तपत्रम् ॥
केनापि तत्र सदसि प्रथितेन पुंसा -
राजन्निजोरु विनयोऽद्य विवाहसत्रम् ॥ ६९ ॥

[4]वाढं यदुक्तमिति तं प्रतिभाष्य भूपो ,
मान्यं [5]विशेषगिरमात्मपुरोधसं सः ॥
प्रस्थापयद्दशरथाय निजात्मजाया ,
पाणिग्रहान्निमिकुलं कलयेति भृत्यम् ॥ ७० ॥

[5]तस्याः स्नुषां तदनुरूपगुणां कुलीनाम् ,
स प्राप संविमृशतो नृपतेः पुरोधाः ॥
तत्रानुकूलवचनो यमिनामिवाज्ञा -
सद्यः फलन्ति सुकृतां हि समीहितानि ॥ ७१ ॥

---

1—(रा० प्र० ९-९५) 2—(रा० प्र० ९--९६)
3—(रा० प्र० ९--९७)
4—वाढं नु चेत्तदिति इति पाठान्तर।
5—सुदोर इति पाठः —(रा० प्र० ९-९८) 6—(रा० प्र०९-९९)

[1]सम्प्रेषितोऽत्रभवतां भवतां समीपे ,
राज्ञा विदेहपतिनेति निशामयध्वम् ॥
रामस्य सत्वरमितो गमनं विधेयम् ,
श्वो वासरान्तरदिने भविता विवाहः ॥ ७२ ॥

[2]तेनोदितोऽथ गुरुणानुमतस्तदैव ,
दृष्ट्वा सुमन्त्रमिदमात्मनि बृद्धहर्षः ॥
तद्वृत्तपूर्वमपि धूर्वहमीक्षमाणो -
ऽप्येकं क्षणक्षणविचक्षणमाचचक्षे ॥ ७३ ॥

[3]अद्यैव यान्तु मिथिलां निखिला मदीयाः ,
कोशाधिपाः सकरभाश्वतरीष्वनस्सु ॥
संस्थाप्य भूरिवसनद्रविणोरुरत्न -
द्रव्याणि पुष्कलधनान्यपराणि पूर्वम् ॥ ७४ ॥

प्रस्थाप्य तान् सपदि सत्वरया प्रतस्थे ,
रामावलोकन - चतुर्गणयाधिरूढः ॥
दिव्यं रथं हरिहयारिविहारहारी ,
हार्य्यच्चलद्धलरजोन्तरिताभ्रचारी[4] ॥ ७५ ॥

[5]अग्रेसरा द्विगुणितात्मजवाधिगत्या ,
पीता ययुश्च पथि रामदिदृक्षयाग्रे ॥
किं चित्रमत्र पशवोऽपि तदा गजाश्वाः ,
शश्वद्विचित्रगतयोऽभिमता वभूवुः ॥ ७६ ॥

---

1—(रा० प्र० ६--१००)
2—(रा० प्र० ६-१०१)
3—(रा० प्र० ६--१०२)
4—अर्करश्मि (रा०प्र० ६-१०३)
5—(रा० प्र० ६-१०४)

चक्रैश्चतुर्भिरुपसृष्टगतिप्रकाश -
आराद्विसृष्टनिजपृष्ठगताश्ववाराः ॥
चेतोजवाश्वगतिरुद्धमरुत्[1]प्रचारा -
स्तथाऽऽसुरिव ते रथसम्प्रसाराः ॥ ७७ ॥

[2]सीमोपयातमवबुध्य स तं जनेभ्यः,
प्रत्युज्जगाम शिविराय विदेहनाथः ॥
आरूढयोस्तुरगवारणयोः पथोर्द्धे -
योगस्तयोर्वरुणवासवयोरिवासीत् ॥ ७८ ॥

[3]ज्यायान्समभ्यधिलसन्तमुदारकांतिम्,
प्रोवाच तं सविनयं मिथिलाधिनाथः ॥
एवं त्वमर्हसि विवर्तयितुं विधानम्,
वैवाहिकं रघुवरस्य यथागमंस्वः ॥ ७९ ॥

[4]श्रुत्वा स तस्य निगमज्ञगणे गिरं ता -
माह स्म तं प्रतिदरस्मितशोभितास्यः ॥
धर्मज्ञ वक्षसि भविष्यसि तत्तथैव,
[5]देयन्तु दातृवशमेव वदन्ति वेदाः ॥ ८० ॥

ततः समागत्य नृपो निशान्तम्,
शांते ध्वनौ जनसमूहभवे दिनान्ते ॥
अन्तःपुरे प्रमुदितोऽनुशशंस राज्ञीम्,
जामातरं रघुवरं त्वमवेहि देवि ॥ ८१ ॥

---

1—जातास्तथा तदिव स्यंदनसप्रसाराः इति पाठः (रा. प्र. ९-१०५)

2—(रा. प्र. ९-१०७)

3—"बृद्धं वरिष्ठयशसं भुजवीर्यवित्तम् प्रोवाच तं विदितबाहुबलप्रवृत्तेः।
स्वान्हि त्वमर्हसि... ।" इति पाठान्तरम् (रा० 'प्र० ९-१०९)

4—(रा० प्र० ९-११०)

5—प्रतिग्रहो भवति दातृवशः परन्तु...इति पाठान्तरम् (रा. प्र. ९-११०)

सम्पाद्यतां सपदि कौतुकवासरार्हो,
भव्यो विधिः सरसगीतिसुवासिनीभिः ॥
गच्छामि नैगममशेषतयार्थविद्धि -
रामन्त्र्य तं तमहमप्यनुसाधयामि ॥ ८२ ॥

तेह्यवमेव मम जीवितनाथनम्री -
भूयेत्यनूद्य तनया वनहेतुरग्रे ॥
मांगल्यसूत्रमपरं च वितानदक्षा -
रक्षाविधानकुशलाभिरतीतनत् सा ॥ ८३ ॥

अङ्के निवेश्य नवमङ्गलवेशवल्गु -
वक्त्राम्बुजश्रियमिलात्मभुवे भवानीम् ॥
मेनेव मानवपतेः सहधर्मिणीं ताम्,
चक्रे पुरः सदसि तत्समयोचितायाम् ॥ ८४ ॥

तत्रोदितव्यवहित[1]प्रसृतौ प्रशस्ता -
या सत्कृता सरससारसतोदराक्षा ॥
बद्धुं तदङ्घ्रिकमले करपल्लवे सा,
रक्षां च माङ्गलिकसूत्रमुपस्थिताभूत् ॥ ८५ ॥

तत्प्रोल्लसन्मणितदुन्मणिबन्धमभ्या -
नीतं तया कुशलया दृढबन्धनाय ॥
तिष्ठत्करं क्षणमुपागतमीक्षयन्त्या -
तस्य त्विषाम्वशदयोक्तमिवाध्यतिष्ठत् ॥ ८६ ॥

---

1—Mss. 2 प्रस्वतौ इति पाठः

उन्नीय नीरकलशीः कलशीध्रगाना -
स्तत्काञ्चनीः कुतकविद्रुमवेदिकायाम् ॥
तास्तामथाश्रितकुलाचरणा कुलस्य ,
नार्य्योर्नरेन्द्रतनयां स्नपयाम्बभूवुः ॥ ८७ ॥

सान्ध्यं यदाभ्रमधरे गलदम्भ आरा -
दूर्ध्वं तदभ्ररुचिरिन्दुरदोन्तरे स्यात् ॥
शम्पास्थिरासित घटानुतदोपमेयम् ,
तस्यास्तदम्बरमुदम्बरमुत्थितायाः ॥ ८८ ॥

तत्प्रत्यनीकमुपचित्रमनुप्रतीकम् ,
निर्माय नेति मुमुदे प्रतिकर्मदक्षा ॥
यद्वस्तुवामतममन्वहमात्मनैव ,
किं तस्य पश्य सखि सम्भृतमण्डनेन ॥ ८९ ॥

[1]तस्मिन्नुपस्थितवति प्रणयार्द्रचित्तौ -
क्षोणीपति समय एव सभासमेतौ ॥
तौ स्वानुभावसुदृशीं सुदृशां विलासैः ,
कन्याकुमारकरयोगविधिं व्यधत्ताम् ॥ ९० ॥

मूलं गता सपदि कौतुकवेदिकाया -
स्ता मैथिलेशतनयातनुमध्यभागाः ॥
देदीप्यमानरुचयः शुचयोभ्युपेता -
बभ्राजुरर्चिष इवाहितचित्रभानोः ॥ ९१ ॥

---

1—(रा० प्र० ८--३१)

यद्दक्षिणेन दरकुञ्चितनेत्रपालि -
नालीकचिद्दृगयनं ननु तत्र तस्याः ॥
कम्पाय रावणवधूमनसामकस्मा -
च्छम्पाविकाश इव वामवपुः श्रयन्त्याः ॥ ९२ ॥

[1]तां भूपजामुद्वहत् स रघूद्वहोऽन्याम् ,
तस्यानुजस्तदनुजां सममुर्मिलाख्याम् ॥
या माण्डवी तदनु या श्रुतकीर्तिनाम्नी -
ते तौ कुशध्वजसुते भरताहितघ्नौ ॥ ९३ ॥

[2]ते राघवाललितमध्यमनोहराभि -
स्ताभिस्तदा चतसृभिस्सहिता विरेजुः ॥
मूर्ताभिरेव ननु सिद्धिभिरस्य नूनम् ,
सामादयोऽवनिपतेरिव मूर्तिमन्तः ॥ ९४ ॥

[3]भिन्नेन्द्रनीलशकलद्युतिरग्रजन्माम् ,
तेषां तया कनक-कान्तिहराङ्गयष्ट्या ॥
सा तेन भूमितनया शुशुभे तयोस्तत् -
योगस्तडिज्जलदसंयुतिसन्निभोऽभूत् ॥ ९५ ॥

[4]एवं गृहीतरतिरुत्तरकोशलेन्द्रो -
वीरान्विवाह्य चतुरोऽर्जितभूरिकीर्तिः ॥
तस्यां सुतांस्त्रिषु पदेष्वविसृष्ट सीता -
तातो न्यवर्तत निजां पुरमादृतः स्वैः ॥ ९६ ॥

---

1—(रा० प्र० ९-११२) 2—(रा० प्र० ९-११३)

3—(रा० प्र० ९-११६) 4—(रा० प्र० ९-११७)

तद्गच्छतोऽनुपदमेव ववुर्विलोमाः -
वाता विमर्दितबलाध्वजभूमिजाताम् ॥
नीचैरलम्बि दधतोऽभिमुखं नृपस्य -
चित्ते स्थिरेऽपि भयमुल्वणमादिशन्तः ॥ ९६ ॥

क्षोणीश्वरे वदति तत्र गुरो किमेतत्,
प्रादुर्बभूव विकटोरुजटां दधानः ॥
क्षत्रान्तकृत्प्रलयवह्निरिव ज्वलँतस्म् -
मार्गे निरीक्षितुमलं स पृथग्जनैर्यः ॥ ९८ ॥

आलोक्य भार्गवमुरुत्वरमर्घ्यमर्घ्यम् -
भीतं गृणन्तमनपेक्ष्य तमाससाद ॥
रामं भवन्तमभयं स विवर्तयन्तम्,
बाणं पुरोङ्गुलियुगेन विवृद्धमन्युः ॥ ९९ ॥

रामस्तु दोर्बलचणोजगतीतलेऽस्मिन् -
क्षत्र-क्षपा - तिमिर- भास्कर एक एव ॥
त्वामस्मि नामबलतो विजिहीर्षुमस्य,
कीर्तेः पुराणधनुषो दलिनं परीक्ष्ये ॥ १०० ॥

सज्यं विधाय मम चापमिमं समक्ष -
मारोप्य मार्गणमुदानय कर्णमूलम् ॥
इत्युक्त एव न परं प्रतिवाक्यमस्मै -
तस्यैव सेषुधनुराहृतराघवोऽपि ॥ १०१ ॥

तत्संगय्य झटितीषुममोघवीर्यो -
मौर्व्या स तत्र विनियोज्य तमित्यवादीत् ॥
वध्यो न मेऽग्रजधनुर्प्रतिबद्धवेगो -
बाणोऽयमाशु कतमां गतिमर्द्धयेते ॥ १०२ ॥

तेनार्थितो मुहुरुपाश्रितजातिवृत्ते -
वीरो विचार्य चिरकालतपोऽभ्युपेताम् ॥
यातस्य सैव परिहार्य्यतरेत्यमोघम् -
संचित्य तं सुमुमुचे विशिखं तदग्रे ॥ १०३ ॥

तत्साधुमोचनमिषोरधिमन्यमानो -
गच्छाम्यविघ्नममरारि वधिष्यतस्ते ॥
भूयादिव दशरथात्मजमप्रमेय -
वीर्यं निरुच्य ऋषिरन्तरयाम्बभूव ॥ १०५ ॥

तस्मिन् गते नृपरुचिः सहसैनिकानाम् ,
कान्त्या तदैव शिशिरे नवपल्लवश्रीः ॥
अन्तर्हितोरुशिशिरानलदुष्प्रधर्षे -
बभ्रं वसन्ततिलका- यति सर्गवृत्तम् ॥ १०५ ॥

अथ पथि नृपतिः कति त्रियामाः ,
सरससुभास्युप[1]कारिके समुष्य ॥
अविशदवनिजाक्षणोत्सुकास्यै -
रनुमरुदागमचन्द्रिकामयोध्याम् ॥ १०६ ॥

---



1—Mss. 1, 2 (कारके)

घनसारचन्दनसारसुद्रवशुद्धसौरभपेशले ,
कमनीयकाञ्चनकंकणादिसुभूषणां विबुधाकुले ॥
ललितालिसुश्रुतिमण्डलस्वरमूर्छनादि करोतिका ,
सदने तयोर्विशतो मनो हृतकस्य नो शुभगीतिका ॥१०७॥

श्रीरामादिपुरप्रवेशनमहो वैवाहिकोत्साहयुग् -
दुर्गादत्तसुशर्मपानकवरीपुत्रस्य तीर्थे कुरोः ॥
सर्गः श्रीरणवीरसिंहविभुनादिष्टस्य संवासिन -
श्चण्डीदासकवेः कृतावुपगतः पूर्तिं च षष्ठोप्ययम् ॥ १०८ ॥



श्रीमन्महाराजाधिराज- जम्बू-काश्मीराद्यनेकदेशाधीश
श्रीरणवीरसिंहवर्मादिष्ट- श्रीकुरुक्षेत्र-मध्यरेखाँतर्गत
पुण्डरीकपुरप्रसिद्ध - सवालवंशावतंस
श्रीदुर्गादत्तात्मजनव्यचण्डीदासकविकृतौ
"रघुनाथगुणोदये" महाकाव्ये
श्रीरामादिमिथिलाप्रवेशवैवाहाद्युत्सवायोध्याप्रवेशादि-
वर्णनो नाम सप्तमः सर्गः ॥ ७ ॥

———

ॐ

श्री रघुनाथगुणोदय- महाकाव्ये

# अष्टमः सर्गः

श्रीः

अथोदयेप्सुः रामस्य ,
लब्धसर्वकलस्य सः ॥
तस्थौ रहः प्रशान्तात्मा ,
पूर्णेन्दोरिव वारिधिः ॥ १ ॥

तदा सुमित्रा कौशल्ये ,
तमुभे समुपस्थिते ॥
अकस्मान्मिलितेऽभूताम् ,
यथोर्मीर्निगमम्बुधेः ॥ २ ॥

जयश्री जगति धूर्य्याम् ,
स्वार्हमाज्ञाय राघवम् ॥
तेऽपीक्षमाणावसरम् ,
तस्थतुः प्रेषिते इव ॥ ३ ॥

सपत्नी शंकमानाभ्याम् ,
पलितच्छलतो[1] जरा ॥
तस्य ताभ्यामिवादिष्टा ,
कर्णमूलमुपेयुषी ॥ ४ ॥

सापीतविषयस्नेहाम् ,
दशान्तत्प्रान्तगस्यताम् ॥
निर्वाणायैव तस्यासौ ,
दीपस्येवोदनीनयत् ॥ ५ ॥

रामेत्यस्य भुवो भारम् ,
भव त्वं भवभूतये ॥
चिरेत्युक्तवती मेने ,
तामुपश्रुति सा श्रियम् ॥ ६ ॥

तयोः सलक्ष्म्योरिव सा ,
विमृष्टिस्तस्य तद्विधेः ॥
तत्रैक विषयाऽप्यासी -
द्भावनार्थीव जैमिनेः ॥ ७ ॥

नाबलामन्त्रितं मन्त्रम् ,
मन्यन्ते कृतबुद्धयः ॥
विपर्ययेण क्षणादेव ,
चित्तवृत्तिर्हि योषिताम् ॥ ८ ॥

---



1—Mss. 1, 2

सर्वगाऽपीति भूभर्तु -
निर्लिल्ये नितरां तदा ।।
मन्त्रभेदभिया किम्वा ,
सागाधे तन्मनोऽम्भसि ।। ९ ।।

मन्त्रभेदात्समुत्पन्नम् ,
व्यसनं भूभृतां शनै ।।
रुपायरपि सामाद्यै -
रप्रतीकार्य्यमेव हि ।। १० ।।

उपक्रमे विधेयस्य ,
विहितस्योपसंहृतौ ।।
मूलमेकं महीशानाम् ,
मन्त्रो वेदविधेरिव ।। ११ ।।

स विशिष्ठ- सुमन्त्राभ्याम् ,
सहितो मन्त्रवेश्मनि ।।
विवेशातो धराधीशो ,
गुरुविद्ध्यामिवाद्रिभित् ।। १२ ।।

स्वपदे प्रवयाश्चाहम् ,
रामं राजीवलोचनम् ।।
अभिषेक्तुं तमिच्छामि ,
गुरवे यदि रोचते ।। १३ ।।

इति ब्रुवाणं काकुत्स्थम् ,
त्वव सम्प्रति साम्प्रतम् ॥
एतत् प्रत्यूचिवान् सोऽपि ,
राजमूलं यतो जगत् ॥ १४ ॥

इन्द्रायतेऽनुकूलेषु ,
प्रतिकूलेषु यमायते ॥
राजते यो हिताचारे ,
सा श्रिया राजशब्दभाक् ॥ १५ ॥

धर्ममेवाप्रमत्तः सन् -
राजा रक्षेत् सनातनम् ॥
स हेतुः सर्वसम्पत्ते -
रिहलोके परत्र च ॥ १६ ॥

महीयान् जायते चीर्णो -
नियमेवानुवासरम् ॥
चिरात्सञ्चीयमानो हि ,
परमाणुर्महीधरः ॥ १७ ॥

राज्यश्रीः सरितो हेतु -
र्धर्मो लोकावनात्मकः ॥
राज्ञो जह्नुतनूजाया ,
हिमवानिव सम्मतः ॥ १८ ॥

---

1—Mss. 1 परमाणुमहीधर इति पाठः

स धर्मस्यास्य जगतो,
बृद्धेर्हेतुः सुसम्पदः ॥
शशी सर्वकलोपेतः,
पूरस्येव पयोनिधेः ॥ १९ ॥

धर्मप्रवृत्तये राजा,
भवेदस्या तमोद्विषः ॥
विनिघ्नन्नित्यमुदितो,
दधत्तेजोंशुमानिव ॥ २० ॥

अस्ति कर्मापि राज्ञोन्य-
त्तत्त्वेनैव वर्ण्यते ॥
तदेव तूच्यते राज्यम्,
यद्भूमिरक्षणोचितम् ॥ २१ ॥

क्रमविक्रममूलत्वा-
त्तस्य तत्सिद्धये पुरा ॥
अहार्यबुद्धिना भाव्यम्,
तेनाभ्यासवतागमे ॥ २२ ॥

सनयो विक्रमन्भूमिम्,
भुञ्जते कुशली चिरम् ॥
केशरीवाचिराद्येति,
केवलं पौरुषं श्रयन् ॥ २३ ॥

---

1—Mss. 1, 2 (द्याति)

बलवानपि सन्नृद्धो[1] -
बुद्धिमानपि गृह्यते ॥
[2]अशस्त्रोऽरिवर्गेण ,
शूरोऽनस्त्र इवाञ्जसा ॥ २४ ॥

अकृतागमसंस्कारम् ,
सुजातमपि मन्यते ॥
नो नायकपदायाप्तः ,
पुत्रं रत्नमिवोशितुः ॥ २५ ॥

तिष्ठन्ति संस्कृते राज्ञि ,
दुरापा अपि सम्पदः ॥
सम्भृता विमलाः लोकात् ,
सरस्याप इवाम्बुदात् ॥ २६ ॥

स पश्नन्नपि सप्ताङ्गम् ,
राज्यं प्राग्विनयादिभिः ॥
गुणैर्नयेन संस्कुर्या -
दात्मानं पृथ्वीपतिः ॥ २७ ॥

सहाय्यान्साधयेत् पूर्वम् ,
सत्कारप्रणयादिभिः ॥
दुष्प्राप्यमपि प्राप्नोति ,
ससहायो हि भूपतिः ॥ २८ ॥

---

1—Mss. 1, 2 (सन्नद्धो) 2—Mss. 1, 2

उदात्तसत्त्वं सत्पक्षे ,
सत्कुलं च प्रियस्वनम् ॥
सरागाननमद्वैतम् ,
मित्रं हंसमिवाजयेत् ॥ २६ ॥

किं मित्रं न हितं ब्रूते ,
तद्यन्नीत्या नयः स किम् ॥
योऽर्थकृत्सः किं स्वामी ?
यो न संश्रृणुते हितात् ॥ ३० ॥

स नयेकृतविद्योऽपि ,
वाजिविद्यां समभ्यसेत् ॥
तां विना पञ्जरोद्घोषि ,
शुकसाधर्म्य- पोषकः ॥ ३१ ॥

विक्रमान्विषयोऽन्यस्मिन् ,
सक्रमं शिक्षितैः हयैः ॥
जयत्यरातीन्सन्नद्धान् ,
सोञ्जसा योश्वसाधनः ॥ ३२ ॥

रक्षणीयं रणे धैर्यम् ,
पाणियुग्मस्य भावयेत् ॥
पुरुषोन्नमिताग्रांगे ,
स्ताकिनाश्वोऽपि नो चलेत् ॥ ३३ ॥

तेजोऽवरोधसमता ॥
सावधानः कशत्रये ॥
विद्वान् विपुलां विद्या -
च्चंचलोऽग्रांघ्रिपालिकाम् ॥ ३४ ॥

बालाभेदे पटुर्धारा ,
प्रसाधयितमुर्म्मिकाः ॥
वीथिषु वलयेद्वाहम् ,
मुखे सिद्धं महीपतिः ॥ ३५ ॥

गतोरुमार्गगत्यून ,
मार्गयान्ततमङ्कितम् ॥
तेऽब्जः फेनाम्बुदृश्या सा ,
न नद्धीभिर्विवर्तयेत् ॥ ३६ ॥

परीक्षणे पटीयान् स्याद् -
गजानां बाहनेऽपि च ॥
मद्रं भद्रमृगाख्या -
नपि गम्भीरवेदिनाम् ॥ ३७ ॥

मत्तं मदोन्मुखं मान्य -
मपि मध्ये महामतिः ॥
मातङ्गं साश्रन्नैव
मुदितोऽपि महीपतिः ॥ ३८ ॥

अश्वेभविद्यया युक्तो .
ऽप्ययुक्तोऽस्त्रागमे नृपः ॥
चालयंस्तान्विनोदाय ,
वन्यवत्यश्मनां पथि ॥ ३९ ॥

शस्त्राभ्यां प्रकुर्वीत ,
विजयेप्सुर्नराधिपः ॥
येनांजसा जयन्शत्रून् ,
संग्रामे नावसीदति ॥ ४० ॥

सदा विक्रमिणा भाव्यम् ,
नित्यमर्थानभीप्सता ॥
मृगानिव मृगेन्द्रेण ,
राज्ञापि विषयान्तरे ॥ ४१ ॥

प्राप्येत परमा सम्प -
त्तेनोत्थापयता निजान् ॥
जयामृताय तेनापि ,
हरिणा श्रीरिवामरान् ॥ ४२ ॥

अनुतिष्ठन्नृपो नीत्या ,
सविद्यो बुद्धिमानपि ॥
अशंकनीयः शत्रूणा -
माशीविश इवाविषः ॥ ४३ ॥

अनुष्ठानं नरेन्द्रस्या -
निगृहीतात्मनोऽखिलम् ।।
समनन्तरमाधत्ते ,
सिन्धोरस्त्रा न सार्थताम् ।। ४४ ।।

शब्दादि- विषयाधीनम् ,
न कुर्यादात्मवान्मनः ।।
मृगेभ - शलभा- मत्स्य -
भृङ्गास्तै राशुपीड़ितः[1] ।। ४५ ।।

योऽनङ्गेनापि कामेन ,
सञ्जीयेताजितेन्द्रियः ।।
कथं पुष्टतमाङ्गान् ,
सन्नद्धान् स जयेन्नृपान् ।। ४६ ।।

कामक्रोधो मदो मानो ,
लोभो हर्षश्च भूभृतः ।।
अन्तरङ्गोऽरिषड्वर्ग -
श्चेदसम्यक् प्रयोजितः ।। ४७ ।।

हृतार्थानिद्रियारातीन् -
जिगीषेत्साहसं विना ।।
निर्विकल्पेन योगेन ,
योगीव पृथ्वीपतिः ।। ४८ ।।

---

1—Mss. 1, 2 (मृगेभ शलभा मत्स्याः भृंगास्तैराशु पीडिताः)

कुर्वन्त्यात्महितं कर्म -
समदास्तेऽत्यन्तनोदिताः ॥
आत्मनैवात्मबन्धाय ,
शाखाछेदं यथा गजाः ॥ ४९ ॥

क्रियन्ते व्यसनायालम् ,
दुर्वृत्तैस्ते दुरीहिताः ॥
साधितान्यपि कुर्वन्ति ,
व्यञ्जनानि पलाण्डवः ॥ ५० ॥

यथावस्थिति संरक्षन् ,
धर्मार्थौ काममाश्रयेत् ॥
वातपित्ते कफध्वंसि ,
भैषज्यमिव बुद्धिमान् ॥ ५१ ॥

अजातविद्यः सद्वृद्ध -
संयोगो धरणीपतिः ॥
निरंकुशो महात्मापि ,
वनदन्तीव नश्यति ॥ ५१ ॥

श्लाघनीयान् गुणान्सर्वान् ,
दूषयत्यवनिपतेः ॥
व्यञ्जनस्य दुराचारः ,
कालकूटनिषेकवत् ॥ ५३ ॥



1—Mss. 2 दुरिहिताः इति पाठः

व्ररोन्धवत्परप्रेयो -
दुर्विदग्धो न तल्लवात् ॥
तत्र रागान्तरं नैति ,
नीली रक्तमिवाम्बरे ॥ ५४ ॥

यथार्थवादोऽपि सताम् ,
तदा श्रेयस्करो भवेत् ॥
स स्यादनुपदं रागी ,
गुणद्वेषी न चेत्प्रभुः ॥ ५५ ॥

तदात्विके मूलहरे ,
कदर्य्ये पृथ्वीपतौ ॥
प्रत्यवायस्तु सुलभः ,
समवायो न कस्यचित् ॥ ५६ ॥

अतो धर्माविरोधेन ,
प्रयतेतार्थ - सिद्धये ॥
यः सदार्थानुबन्धेन ,
स स्यादर्थस्य भाजनम् ॥ ५७ ॥

यस्तथोपचितं तीर्थे ,
तं न सम्भावयेत्सुधीः ॥
स विनश्यत्यशेषेण ,
मधुच्छत्रमिवात्मनः ॥ ५६ ॥

ईहमानोऽपि यो वृद्धिम् ,
तद्धेतुं न स्वयं चरेत् ।।
भवन्ति भावनास्तस्य ,
[1]स्वप्नसाम्राज्य सन्निभाः ।। ५९ ।।

प्रमादी ज्ञातसारोऽपि ,
स परैरवमन्यते ।।
केशरीव मृगैः सुप्तो -
ऽभयैः प्रान्तपदक्रमैः ।। ६० ।।

करोपहार्य्या अपि या ,
नाश्रियन्ते श्रियोऽपि ताः ।।
शयालु मेरुपमिव ,
सम्पन्नाः शस्यपंक्तयः ।। ६१ ।।

उपायेन पिबेन्नित्यम् ,
मृदुना राष्ट्रमाश्रयन् ।।
कपयन्नेव सुप्तांघ्रि -
माखुशल्यकवानि च ।। ६२ ।।

मधुदोहं धरां दुह्या -
न्नृपोऽग्रे निदधत्पदम् ।।
शनैरपीडयन् मूलम् ,
मधुपा इव भूरुहम् ।। ६३ ।।

---

1—Mss. 1 स्वसाम्राज्य इति पाठः

अनुरक्षति यो रक्ष्या -
ऽक्षन्नात्मानमग्रतः ॥
राष्ट्रं विवर्धते तस्य ,
स चिरं सुखमश्नुते ॥ ६४ ॥

बाह्यानाभ्यन्तरात्तेभ्य -
स्तं परेभ्यश्च तानवन् ॥
स स्वादु फलमश्नाति ,
मालाकार इव द्रुमान् ॥ ६५ ॥

उच्चावचेभ्यः सर्वेभ्यः ,
कण्टकेभ्य इव स्वयम् ॥
रक्षन्रक्षेद्धरां धीमा -
नात्ममूलं यतोऽखिलम् ॥ ६६ ॥

किं रन्ध्रं को व्यसनकृत् -
किं ममाप्रतिकारकम् ॥
कुतो दोषोऽम्बुवाहीव ,
नृपो नित्यं विचिन्तयेत् ॥ ६७ ॥

दुर्बलस्याश्रुरोधाय ,
दधद्रक्षाञ्जनं [1]नृपः ॥
अस्पृष्टं तज्जलान्मापि ,
नोचेद् दूरात्तमादहेत्[2] ॥ ६८ ॥

---

1—Mss. 1 नृपाः इति पाठः ।
2—Mss. 1 दूराज्जमाददेत इति पाठः

प्रयोज्यौ भवतो राज्ञा ,
दण्डक्रोधोऽपकारिषु ॥
तेषु तूपशमो नित्यम् ,
मुनीनामेव भूषणम् ॥ ६९ ॥

यस्यात्मशक्तेः सदृशौ ,
न स्यातां क्रोध सम्मदौ ॥
सो विक्रमन्मरौ नित्यम् ,
[1]श्वसन् भस्त्रेव जीवति ॥ ७० ॥

दण्डनीत्यामिव त्रय्या -
त्रय्यामिव विवेकवान् ॥
बार्तायान्तत्रवद्भूया -
दान्विक्षिक्यां नराधिपः ॥ ७१ ॥

सद्गुणाङ्गस्वरप्रज्ञाम् ,
त्रिवर्गग्राम- भूषिताम् ॥
सेवेत समयोपेताम् ,
गीतिं नीतिनितम्बिनोम् ॥ ७२ ॥

इष्टशक्तिः बलाधाने ,
गानमेकं रसायनम् ॥
सर्वाहितमपध्वंसि ,
षाड्गुण्यमवनीभृताम् ॥ ७३ ॥

---

1—Mss. 1, 2 (श्वसन्)

यथार्हमुपयुञ्जानो ,
स षट्त्रिंशद्गुणान् स्वयम् ॥
स्तूयतेऽनुपदं सद्भिः ,
श्लेषादीनीव सत्कविः ॥ ७४ ॥

स त्रिवर्गं च षाड्गुण्यम् ,
त्रिवर्गं परैस्सह ॥
यो वेत्ति वसुधां भुङ्क्ते ,
स विजित्य परांश्चिरम् ॥ ७५ ॥

कण्ठायासं परित्यज्य ,
यस्तद्वाणी सद्गवचः ॥
सद्विशेषो वशयत्याशु ,
यथा वैतंसिको द्विजान् ॥ ७६ ॥

दीपस्येव मृदुन्यस्तम् ,
महस्तस्य नयेन यत् ॥
दशां प्राप्य तदेवालम् ,
भोक्तुं तत्स्नेह सम्पदम् ॥ ७७ ॥

रिपुरन्ध्रेक्षणाभिज्ञः ,
[1]स्वाङ्गरन्धावको भवेत् ॥
भोगीव विनतो यायी ,
जिघृक्षुः परवेश्मनः ॥ ७८ ॥

---

1—Mss. 1, 2 (संगरे धावको भवेत्)

अर्थविज्जडमूकान्ध ,
मत्ताद्याकृतिचारकः ॥
भवेदुत्साहवाँस्तीर्थे ,
युक्तचारोपधिर्नृपः ॥ ७९ ॥

कुर्यात् षडपि दुर्गाणि ,
सम्पन्नात्यायुधादिभिः ॥
स्वयं तु संश्रयेत्तत्र ,
नर दुर्गं नराधिपः ॥ ८० ॥

सन्मनुष्य महाकोशं ,
वर्धयेद्वर्द्धयन्नपि ॥
कोशं हिरण्यभूयिष्टं ,
यो नृपः सोऽधिकोभवेत् ॥ ८१ ॥

प्रायः सत्यपिभूमीशः ,
संग्रहैस्सैन्यकोशयो ॥
अन्न काष्ट तृणादीनां ,
कुर्यात्संग्रहमप्यलम् ॥ ८२ ॥

सकोशाः कृतविद्याश्च ,
सन्तु वीराः सहस्रशः ॥
शक्नुवन्त्यन्तरापन्नो ,
स्थातु ह्यन्नमयः पुमान् ॥ ८३ ॥

जल यन्त्राणि कुर्वीत् ,
पर्वताग्रेऽपिभूमिपः ॥
नतिष्ठन्तिक्षणं येन ,
विनायज्जीवनं नृणाम् ॥ ८४ ॥

प्रत्यर्थि भूभृतां सीन्नः ,
समीपेदुस्सहंवलम् ॥
स्थापयेत्सर्वमन्नादी -
त्रक्षस्तत्राविदूरतः ॥ ८५ ॥

युग्मम्—

स्वास्यो दूत मुखः स्वंगी ,
प्रकृत्यंगोऽपिवाक्पटुः ॥
दूतास्योधिषणास्त्रोऽस्त्री ,
चारूनेत्रोऽपि चारदृक् ॥ ८६ ॥

घन सम्बृत्ति सन्नाहो ,
वर्मवानपि सर्वदा ॥
भवेञ्चतुर्विधेराजा ,
राजवृत्ते विचक्षणः ॥ ८७ ॥

यथार्ह वर्णं विन्यासा ,
मंतस्तूलोदयप्रियाम् ॥
सोऽभितोऽशीतरिपुणा,
जप्यो नीतिपटीं श्रयन् ॥ ८८ ॥

इति सर्वं गुणोपेते ,
रामे राज्यार्पणं वरम् ॥
सोऽप्याहाश्वाभिषेकाय ,
संम्भारं कुरूमाचिरम् ॥ ८९ ॥

सुधास्य द्विर्वचस्तस्य ,
सन्निशम्य श्रवप्रियम् ॥
प्रतिवक्तुं सुमन्त्राय ,
दशासोऽवसरं ददौ ॥ ९० ॥

अथ सोऽपि समो मन्त्रे ,
मंत्रिणा[1]ग्रेतयोर्द्वयोः ॥
उवाच विनयोपेतां ,
गिरमर्थगिरीयसीम् ॥ ९१ ॥

गुरूणा गदिते युक्त ,
मधुनालमुदीरितुम् ॥
शिक्षितेनापि शिष्येण ,
तत्त्वजिज्ञासुनाततः ॥ ९२ ॥

तथाप्यर्थप्रकाशाय ,
सैवमेऽस्तु प्रयोजिका ॥
उपासन्तस्य भृत्यानां ,
माज्ञेवावनिरक्षितुः ॥ ९३ ॥

---

1—Mss. 1 ( मन्त्रिणोऽग्रे )

एदद् वचः श्रुतेरर्थ ,
मन्वेतुममवागपि ॥
साभिसन्धिः सहोपाया ,
सेविहासास्मृतिर्यथा ॥ ९४ ॥

समयेऽपि समुत्पन्न :
मुत्साहक्षितिजांकुरः ॥
[2]आवृत्य सर्वतो रक्षे ‘
दहितातपवाततः ॥ ९५ ॥

प्राप्य पुष्टतमां प्रज्ञाम् ,
वारिसेकसकन्बिताम् ॥
सह कारिभिरावृद्धैः ,
सफलायोपकल्प्यते ॥ ९६ ॥

अतो विनिश्चितायेन ,
तेपुरात्मनिधीमता ॥
तस्य साध्या भवन्त्येव ,
भविष्यंत्योऽपि सम्पदः ॥ ९७ ॥

व्यवस्य कुर्वतोजातु ,
स्वल्पं वास्यकिमप्युरु ॥
आरोहतस्तुलांवात्म ,
वपुषीवापरात्मिकाम् ॥ ९८ ॥

---

1—Mss. 1, 2 ( मावृत्य )

प्रतीक्ष्यैव त्रयीपूर्वं ,
चतुर्थेदधतां पदम् ॥
नरेन्द्रेण प्रबंधाय ,
कविनेवार्थसिद्धये ॥ ९९ ॥

यद्यप्यावौधयत्येव ,
लक्षणाव्यंजना- द्वयम् ॥
तुर्यासमप्यनुसंधेया ,
सन्धियोगविचक्षणैः ॥ १०० ॥

सर्वस्याः स्वार्थमुह्यन्त्या ,
स्तस्यास्तात्पर्यमत्रहि ॥
तथाप्यागंतुकोपाधेः ,
साध्यासाग्रेनिवृत्तये ॥ १०१ ॥

या तत्संसाधिका तत्र ,
का परम्परयापि सा ॥
साक्षाद्वापीह संसिद्धे -
स्तुरीये लभतेऽन्वयम् ॥ १०२ ॥

एकोऽपि भिद्यते भोवे[1] -
रात्मा पुंसः प्रियैरपि ॥
स मनोभिरिवानेक -
भेदः को दुष्करोऽहितै ॥ १०३ ॥

---

1—Mss. 1, 2 (भावैः)

एकाश्रयानपि बहून् ,
दुर्जनाः प्रतिरूपकैः ॥
भेदयन्ति जलानीव ,
कुल्याभिरिव कार्मुकाः ॥ १०४ ॥

संहिताश्चेन्न भिद्येर -
न्नक्षिताः स्वोच्चरोधसा ॥
आप इवाश्रयन्ते ते ,
सर्वतस्तत्[1] समाश्रयान् ॥ १०५ ॥

मित्राणीव प्रियालापाः ,
भृत्या इव विशेषिणः ॥
स्वे परे न प्रतीयन्ते ,
रिपवो बहुरूपकाः ॥ १०६ ॥

अतः परीक्षणीयौ तौ ,
सर्वतो हितमिच्छतः ॥
मित्रामित्रौ स्वनिर्णीताम् ,
स्मरतात्मजनाकृतिम् ॥ १०७ ॥

कृत्रिमः प्राकृतश्चापि ,
सहजस्त्रिविधः सखा ॥
तथा हितोन्त्यो मित्रे च ,
मित्रौ स्यातां न चादिमः ॥ १०८ ॥

---

1— Mss. 1, 2 (सर्वांस्तान्)

उषायैः प्रतिकार्यौ तौ ,
सहजोऽरिर्न शक्यते ॥
प्रतिकर्तुं प्रवर्षद्भि -
र्विद्युदग्निरिवाम्बुदैः ॥ १०९ ॥

सह्यतेऽपि च सापत्न्यैः ,
सापत्न्यश्रीः स दृश्यते ॥
इच्छन्तीनां पृथग्भावम् ,
सपत्नीनां तु दुःसहा ॥ ११० ॥

तस्मादत्र स शत्रुघ्नो ,
भरतोऽप्येतुमर्हति ॥
अथवार्हाऽस्ति कैकेय्या ,
सुमित्राया इवापि वाक् ॥ १११ ॥

प्रभो सर्वविदस्यास्य ,
पुरो यद्गदितं गुरोः ॥
सेयं चिरादधीतस्य ,
ज्ञेया गुणनिकैव मे ॥ ११२ ॥

नाविचार्यं किमपि स्वयंचरे -
न्नावभूपुरधिको धनैः श्रिया ॥
कर्मणि प्रविविधानमन्यथा ,
सेतुबन्धमिव निर्गते जले ॥ ११३ ॥

जनयन्ति भयं सुदारुणं रभसा ,
स्वा अपि सम्भृताः क्रियाः ॥
गतयो विनिपातयन्ति हि ,
सरितां सुत्वरिताः स्वरोधसि ॥ ११४ ॥

न सामान्यज्ञानात्क्वचिदपि विना तेन विदुषाम् ,
प्रवृत्तिर्वस्तूनां पुनरपि निवृत्तिः कृतधियाम् ॥
स्वयं दृष्टे वस्तुन्यपि खलु यतो मुह्यति मतिः ,
कदाचित्संशेते क्वचिदपि विपर्य्यस्यति नृणाम् ॥ ११५ ॥

अपि दृशाधिगतं श्रुतमप्यलम् ,
चिरपरीक्ष्य तु साध्वनुतिष्ठति ॥
न विषयेऽन्यगिरामनुवर्तते ,
भुवि स एव विचारविदुच्यते ॥ ११६ ॥

पुरा कृतारम्भमुपात्तकर्मणो -
विधेरनुष्ठानमनुष्ठितं तु ये ॥
विशेषमात्रा विनियोगसम्पदम् ,
प्रकुर्वते कर्मसु तेऽत्र मन्त्रिणः ॥ ११७ ॥

विशोभते सोऽखिलकार्यवर्ष्मसु ,
निरूपितोंऽगैरिव पञ्चभिर्निजैः ॥
महीपतीनां प्रकृतिप्रसादकः ,
स्कन्धैरिवात्माश्रितबुद्धवर्त्मनाम् ॥ ११८ ॥

अनेकधा कृतैस्तच्छलेन रत्नभित्तिषु ॥
स्वसंक्रमस्य कैकेयोभि ये वतस्थुरात्मभि ॥ ११९ ॥

आसनान्युन्नतानीक्षरणायैव तै -
राश्रितानीति हैमानि दिक्षु क्रमात् ॥
योऽनुरक्तोऽपि नित्यं भवेन्नो विशेन् -
मन्त्रकाले कथा त्वन्यदीयस्थ का ॥ १२० ॥

संयुतः सोऽनृजुर्मन्त्रिभिः पीडयेत्तत्र भूमिभृतम् ॥
अन्तराविश्यतद्रन्ध्रकैः सानिलोऽग्निर्यथा पादपम् ॥ १२१ ॥

नौश्चाविशवरणं शिखरम् ,
मन्दिरभूमिभृतोर्विशदम् ॥
अप्रतिशब्दमतो हि पदम् ,
मन्त्रकृतेर्नृपतेर्भणितम् ॥ १२२ ॥

अनुपेतमतेर्विनिश्चयो -
ऽप्युपलब्धस्य च तस्य सारिता ॥
करणीय विकल्पवारणं किम् ,
यदाप्तस्य च सर्वलाभता ॥ १२३ ॥

फलं महत्कार्य्यसुसिद्धरंगिनाम् ,
तनुप्रयोगेण विनोरुसाहसम् ॥
उशन्ति तस्यार्थविदोऽधिनीयते ,
शिलामहस्तैनयथकदारुणा ॥ १२४ ॥

रामस्यात्मपदेऽभिषेकविधये मन्त्रेण राज्ञो लसन् ,
दुर्गादत्तसुशर्मपानकवरीपुत्रस्य तीर्थे कुरोः ॥
एषः श्रीरणवीरसिंहविभुनाऽदिष्टस्य सवासिन -
श्चण्डीदासकवेः कृतावुपगतः सम्पूर्णसर्गोष्टमः ॥ १२५ ॥



श्रीमन्महाराजाधिराज- जम्बू-काश्मीराद्यनेकदेशाधीश
श्रीरणवीरसिंहवर्मादिष्ट- श्रीकुरुक्षेत्र-मध्यरेखाँतर्गत
पुण्डरीकपुरप्रसिद्ध - सवालवंशावतंस
श्रीदुर्गादत्तात्मजनव्यचण्डीदासकविकृतौ
"रघुनाथगुणोदये" महाकाव्ये
श्रीरामराज्याभिषेकार्थः नीतिनिरूपणो
नामाष्टमः सर्गः ॥ ८ ॥

———

ॐ



# नवमः सर्गः

श्रीः

परैप्रियस्याभ्युदयोक्तिरासी -
द्राज्ञोऽपि सोपश्रुतिराघवस्य ॥
चित्रं परं नोपगतापि तस्मान् -
प्रत्येकमाह्लादयदाशु पौरान् ॥ १ ॥

तेऽन्यत्यवोचन्नपि यत्तदेव ,
मन्ये तया सर्वगयेत्यभाणि ॥
स्वाङ्गस्थयापीति मुधानमन्त्रे -
स्वीयोऽपि नैवार्हति सर्वगामी ॥ २ ॥

तेषां गिरो यद्भविताभिषेको ,
रामस्य संशुश्रुवुरागताय ॥
तत्रेति तेभ्योऽपि निशम्य हर्षात् ,
प्रापुः पुरे जानपदा सहर्षाः ॥ ३ ॥

1—Mss. 1, 2 (तत्रोत्सवः)

[1]तत्रौत्सवः सोऽतिविजृंभमानो ,
ध्वानो विशद्भिः परिशुश्रुवे तैः ॥
चन्द्रोदये पर्वणि वर्द्धमान ,
पूरस्य निस्वान इवाम्बुराशेः ॥ ४ ॥

तन्मंथरा केकयनाथपुत्र्याः ,
प्रासादमिन्दुद्युतिमारुरोह ॥
संसूचिकानिष्टगणस्यकुब्जा -
दैवात्तदैवाग्निशिखेव रुद्धा ॥ ५ ॥

सा सर्वतश्चंदनसारसिक्ताम् ,
युक्तांवितानैर्विविधैरयोध्याम् ॥
वीक्ष्यावबुध्यापि कुतोऽभिषेकं ,
रामस्य राज्ञ्यै त्वरिता शशंस ॥ ६ ॥

संसूच्यतस्यैतमपि प्रसिद्धं ,
नाम्नातुनैजंभुवि मंथरात्वम् ॥
तद्यत्ससतत्वं प्रतिरुद्धमन्तः ,
साशीविषीवोद्गरमुद्ववाम ॥ ७ ॥

संजात हर्षापि निशम्यतत्सा ,
तद् वाक्यकृष्णोरगराज दष्टा ॥
श्रोत्रेमुहुर्मर्मणि[1]भग्नचित्ता ,
मोहेमहींचाश्[2]नं प्रपेदे ॥ ८ ॥

भूषणानि निहितानि रेजिरे ,
तन्मुखोपधियते मुपाश्रयम्[1] ॥
बज्र मौक्तिक मयानिभाति वा ,
रोष राहु मृदितद्युतेस्तदा ॥ ६ ॥

पञ्चवाणवशगोऽवनीपति -
र्वीक्ष्य भूमिपतितां तथा विधाम् ॥
तां च सा मुदमियाद्यथा -
ऽकरोद्वीक्ष्यभूमिपतितां तथाविधाम् ॥ १० ॥

[2]स्वसतीवरुषाऽविपन्नगी -
नुनिःसीम महाविपन्नगी ॥
उद्पश (दसौ विपन्नगीगदिता ,
सासतदा विपन्नगी ॥ ११ ॥

सारयत् [3]स्वांसितापीहते ,
भूभृतास्यासिता[4] पीहते ॥
कोविदास्वा[5]सितापोहते ,
निर्घृणे [6]स्वासितापीहते ॥ १२ ॥

तथा सुसंभृत स्वरैः प्रसादितामुहुर्मुहुः
नृपेण सत्य संगरेण यत्पुराप्रतिश्रुतम् ॥
वरद्वयं तदेव सातिकोपना पुनःपुन-
र्वहिश्चकार वक्रतोयथोरगी रसायुगम् ॥१३॥

---

1—Mss. 1, 2 (नृपतेरूपाश्रयम्) 2—Mss. 1, 2 (श्वसतीव)
3—Mss. 1, 2 (श्वासिता) 4—Mss. 1, 2 (श्वासिता)
5—Mss. 1, 2 (श्वांसिता) 6—Mss. 1, 2 (श्वाशिता)

तत्र सैकेन रामस्य व्रासंवने ,
निर्विवेका ययाचेचतुर्दशसमाः ॥
निर्दिश्यान्येन निर्द्वेन्द्वतामात्ममनो ,
विधवत्वैक शोभां भविष्यत्फलाम् ॥ १४ ॥

स केकयी हृत्परितापशान्तये -
रघूत्तमस्तामभिषेक सम्भृतिम् ॥
उपेक्षयामासत राम योध्यया ,
परोपतापाय सतां न भावना ॥ १५ ॥

पित्रा प्रसन्नेन यथागमंमहीं ,
दत्तां पुराप्राप्यपपातभूतले ॥
रामोनिजार्हामपि साश्रुराददे ,
गच्छाऽवींभूपनिदेशमादरात् ॥ १६ ॥

सोऽवकृत्य नृपार्ह मम्वरे ,
वल्कले सुरुचि केकयी करात् ॥
सम्प्रगृह्य सुदधन्निरैक्षतरे ,
निर्विकार रुचिराश्रितैर्जनैः ॥ १७ ॥

नत्वा रामः पितृपादौचमातुः ,
सर्वांगच्छन्नूच्यते स्मान्वगच्छत् ॥
सेनाऽनेनाप्येषपद्भ्यां प्रयातु ,
श्रुत्वाप्येवं नो विचक्रेऽस्यचित्तम् ॥ १८ ॥

यामभ्यासे संविहरन्ती ततभोगाः ,
रवांतर्द्धीना द्रष्टुमपीषत्प्रवभूवुः ॥
लज्जीभूतां भोजयुगाभ्यां चरणाभ्यां ,
रामं छायेवान्वगमत्सावनिजापि ॥ १९ ॥

इयमवनि सुतापिवारितानो ,
सरस ज्ञिरीषविशेष कोमलांगी ॥
परिजगगदुरुदात्तभीतिलोका -
धिगिति हि केकयभूभीपालपुत्रीम् ॥ २० ॥

स्वार्हाण्यप्युरुजातरूप्यमिलसत्तंतू निभृत्यापयः ,
क्षौमाणिक्षितिपेन संभृतिकृतेदत्तानि तुष्टोददौ ॥
निश्चिन्वन्निवयाति राम पदकं सीता पदान्तर्हितं ।
सोऽयंनम्रमुखोऽद्यवल्कलधरः सीतानुगोलक्ष्मण ॥२१॥

अवन्न सत्यात्पितरं ससीतया ,
सलक्ष्मणो दर्शितपितृभावनः ॥
सदण्डकारण्य मगण्य गौरवो -
ऽविशच्चवीरोनुमहात्म मानसम् ॥ २२ ॥

तदाक्षितीशोऽपफलोन्मुखंमुने -
र्हतात्मजस्यात्मजविप्रयोगतः ॥
विमृश्य शापं परमस्यकेवलं ,
वपुर्विसर्गं सममंस्त निष्कृतिम् ॥ २३ ॥

तां भुवमस्तमिते नाचकमे -
ऽनीकंद्विषां समस्तमितेनाम् ॥
प्रोषित सकलकुमारां तमसां ,
सन्ध्यामिवात्त सकल कुमाराम् ॥ २४ ॥

भरतं महसा समितास्तदमात्याः ,
कृत्रिमारि सहसा समिताः ॥
जननी सहजकुलांत्त मौलै ,
रानाययत्स्व सहज कुलान्तम् ॥ २५ ॥

समुपागतः सनिशमय्य[1]पितुः ,
शमनं तथा विधमभूद्विमुखः ॥
निजमातुरेवन नृपासनतोऽपि ,
च केकयाधिपभवात्मभवः ॥ २६ ॥

प्रतिलोभितोऽपि मुहुरुर्जिततया ,
सनृपश्रियार्य्य गमनेन गुरोः ॥
युगमेनबा निज कनिष्टतया ,
विनिवारितश्चसुमुमोहभृशम् ॥ २७ ॥

प्रवरेन्दिराग्रहनिमित्तकयान्वितया -
धियात्मपरिवेतृतया ॥
भवितव्विावनिघृतेरदिशत् ,
सततमेवते प्रति गिरिस्थमुरूम् ॥ २८ ॥

---

1—Mss. 1, 2 (तत्रोत्सव)

तातासितातततातततोऽतीत -
स्तत्तुसतासितः ततः ।
सततः सततः सन्तं ,
संततं संततं ससः ॥ २९ ॥

स सेनस्तमानेतुमायात्ससेनः सदस्यः,
सुसानुस्थितंतां सदस्यः निदेशाद्गुरोः ।
पादुकामानिदेशाद्ययाचेऽधि ,
कामाऽऽवनंस्याधयाचेत् ॥ ३० ॥

**एकाक्षरपाद :**

ददद्दाददादोऽदा ,
तेततोऽस्ताततोऽतितुत ।
मयाऽऽययौयंयौयायी ,
सासुः सासिः ससास्यसौ ॥ ३१ ॥

तातं ततं तताऽतंतु ,
तातोऽतोऽतोऽतितोऽति तत् ।
ततेतं तेततातै -
तत्ताताऽतोऽततंतुतत् ॥ ३२ ॥

शिरसा प्रणिधायतयोर्युगलं ,
प्रथयन्नधिदैवतमेतदिति ।
इह नन्दिपुरे प्रविश्यधरा-
ललमानमनस्य हि यामिकं बत ॥ ३३ ॥

मातुः पापस्यात्मनामैकहेतो -
रज्ञातस्याप्याप्तभूमि विहारः ॥
भ्रातुर्ज्येष्ठस्यागमं चिन्तयन् स ,
प्रायश्चित्तंनूनमेतच्चकार ॥ ३४ ॥

रुचिर पुष्पलतासु वनस्थली-
ष्व¹गते भरते भरताग्रजः ॥
जनकजा सहितो निर्वर्तय-
द्वनफलैः सरसैरिव सानुजः ॥ ३५ ॥

सवनस्पतिमाश्रमेकदाचित्
सुघनच्छायमुपेत्य भूमिजायाः ॥
अशयिष्टवनश्रमादिवांके ,
सुविदूराहितलक्ष्मणो विशंके ॥ ३६ ॥

वक्षोजौ विददार कान्तनखरच्छेदेषु भूमीभुवः ,
पौरोभाग्यमिवाचरन्नतितरामैंद्रि द्विजो राघवः ॥
काशस्त्रं स मुमोच तत्र स तया संबोधितः सर्वतो ,
भ्रान्तोऽयेकदृशोऽन्वयेन मुमुचे तस्मात् स तस्मात् पुनः ॥३७॥

स विचिन्त्य गतिं विधेऽपुन -
र्भरतस्यागमनं विशंक्य च ॥
अजहादिति सन्निधेः स्थलीम् ,
विततां तां प्रियकव्रजैः प्रियाम् ॥ ३८ ॥

1—Mss. 1, 2 (स्वपाठे)

अथाऽतिथेयी कुशलेषु कोशला -
पतेस्तनूजोनिवसन्वनौकसाम् ॥
कुलेष्ववसावापतदक्षिणांदिशं ,
सप्तर्षिकक्षेष्वि[1]तिग्मदीधितिः ॥ ३९ ॥

तमन्वयन्तीशुशुभेशुमानना ,
शुभेतराचारपराङ्मुखात्मकम् ॥
सदन्वया साबहुशोऽपि वारिता ,
पयोधिजातेवगुणानुरागिणी ॥ ४० ॥

तदगरागेणसुगन्धिनाटवी ,
समर्पितेनोरूधियाऽनुसूयया ॥
अकारि पुष्पस्तवकोच्चलन्मधु -
व्रतातया सर्वगुणानुसूयया ॥ ४१ ॥

घनच्छायरम्येऽस्तपोभूमिजाता ,
महार्षीदकस्मादरण्येविराधः ॥
भवन्नाद्यवस्याग्रतो वारिवृष्टि -
पयोदागमेभास्करस्येव भौमः ॥ ४२ ॥

पुरः सांध्यमेघारुणांभूधरेन्द्रं -
प्रभाक्षोभकंकायमुग्रं वहन्तम् ॥
तमालोक्य रामोऽपिसज्यंशरासं -
प्रकुर्वन्नुवाचेतिसौमित्रीमारात् ॥ ४३ ॥

---

1—Mss. 1, 2 (छिवव)

जातामाता ,कृतार्थावरमतिरधुना कैकयीमध्यमामे ।
पश्यन्तीत्वामनाथामिवमृदितमृगीनेत्रजिल्लोचनाभ्याम् ॥

पश्येमां वेपमानां जनक नृपसुतां रक्षसोंके विषण्णाम् ।
पत्नींमेवीरवाताहत नवकदली दोलनामाक्षिपंतीम् ॥४४॥

इत्याकर्ण्यैव रामोदितमतिरभसा लक्ष्मणोदुस्सहोयः ।
संरम्भोभ्रातुराज्ञावतिहृदि भरते राज्यकामे निरूद्धः ॥

साकं तेनास्त्रपस्योरसि निशिततरं सायकंतूत्ससर्जं ।
ग्रावप्रायेऽवनीध्रेऽचिरविधृतरूषाजम्भभेदीववज्रम् ॥४५॥

स तस्थौं ततः सीतया लक्ष्मणेना -
ऽनपोढास्थितिः पंचवट्यामरिघ्नः ॥

व्रतत्या समुद्रोधतः स्वप्रकृत्या ,
मिवादेशतो कुम्भजातस्य विन्ध्यः ॥ ४७ ॥

सरससमीरस्समूढपरागा -
विहगविहागविशेषितभागा ॥

पंचवटीप्रियपल्लवरागा ,
कस्य मुदे न सदा रुचिरागा ॥ ४८ ॥

इति वदन्तंवनङ्गनिपोडिता -
-तमतुलं पुरुषादयतेः स्वसा ॥

अभिससार ततः स्वयमौरगी -
मलयजातमिवातपतापिता ॥ ४९ ॥

जनकजांतिक एव तमावृणोः,
त्रिगदितात्मकुलाविगतत्रपा ॥
इति सदेव मदोष्टगुणः स्त्रियाः,
किमपि पश्यति यत्र तदातुरा ॥ ५० ॥

कृतदारपरिग्रहोऽस्मि बाले,
बलिनं भीरु भजस्व मेऽनुजातम् ॥
तरुणं नलिनीदलायताक्षम ,
तव तारुण्यतटाकटंकनार्हम् ॥ ५१ ॥

सा तमोरसि भृशमाशुगेन विद्धा,
पञ्चेषोः प्रचलितमानसानभिज्ञा ॥
भावे तद्गदितगिरो जगाम तूर्णम्,
घूर्णन्तीति[1] तदुपनिबद्धपर्णशाला ॥ ५२ ॥

मान्यायास्तव किमिहार्य दासदासी,
भावेनान्यदपि पुराऽवृणोस्तमेव ॥
इत्युक्ता पुनरुदयात्तमेव तेन,
स्त्रीरूपा सुमनुनिवारितेव कृत्या ॥ ५३ ॥

सीतायास्मितमुपतिष्ठति पुनस्ताम् -
संरम्भक्षणपरिदृष्टसौम्यभावाम् ॥
निन्येऽन्यामधिकमतामिवानुपेत -
प्रियोंकां स्वमुखसदृशः सपत्न्याः ॥ ५४ ॥

---

1—Mss. 1, 2 (घु°)

त्वमनुभविष्यसि फलमधुनैव -
मयि विहितस्मितजातमवश्यम् ॥
भक्षिणि भक्ष्यपराभवलेशो -
वितरति सा सुपदच्युतिमाशु ॥ ५५ ॥

कम्पवदङ्गा [1]रघुवरांकम् ,
निर्विशति तामिति तरलाक्षी ॥
पश्यति रुद्धा क्षितितनयां सा ,
सूर्पनखाख्या समवपुरासीत् ॥ ५६ ॥

तां खरध्वनिवशाद्विक्तेति ,
सम्प्रविश्य विवृतासिरकार्षीत् ॥
लक्ष्मणो लवनतो नसिकर्णे ,
तत्र तेन गदितोऽतिविरूपाम् ॥ ५७ ॥

सा लब्धा प्रकृतिमयानि कापि तस्मा -
द्वैरूप्यं द्विगुणितमेव तुष्टिदानम् ॥
अंगुल्यङ्कुशसदृशाल्पमित्युभौ तौ ,
मत्तेभाविव समतर्जयन्नभोगा ॥ ५८ ॥

उपक्रमं रघुत्तमस्य यातुधानकानने ,
प्ररूढवीरभूरुहच्छिदौ नवं न्यदर्शयत् ॥
खराय सा सदूषणाय भूषणाधिकोल्लस -
द्विरूपणाऽनिदर्शनच्छलात्ततो जनस्थितौ ॥ ६० ॥

---

1—Mss. 1, 2 वराङ्कम् ।

कृत्वालूनमुखावयवां ता -
मग्रे तेऽभिययू रघुराजम् ॥
यत्क्रव्यादकुलांतविशंसी ,
तेषामास तदेव सुभद्रम् ॥ ६१ ॥

निशाचरास्ते तु सहस्रशोऽप्यथ -
तमेकमेव प्रतियोधमाहवे ॥
प्रयुध्यमानं ददृशुः समीक्ष्यते ,
मुमूर्षुभिस्त्वेकमपि ह्यनेकधा ॥ ६२ ॥

प्रयुक्तमप्याशु खरेण दूषणम् ,
विधातुकामेन किमप्यदूषणम् ॥
तमन्वलीकं हि स तेनवैक्षत ,
समिद्धबाणाय स गोलके धृते ॥ ६३ ॥

खरोहमित्यथास्पृश्यः ,
स्वयं त्रिशिरसा सह ॥
प्राणान्तं रामवाणाग्नौ ,
प्रायश्चित्तमिवाकरोत् ॥ ६४ ॥

अनुत्थानभया सापि ,
शिवा संवाहनोत्सुका ॥
मृध्रच्छायातपत्राधः ,
मुखं सुष्वाप वाहिनी ॥ ६५ ॥

हृतास्त्रपावृतान्तरा ,
रणस्य सास्तभासुरा ॥
अभूदनन्यगोचरा -
धराकबन्धबन्धुरा ॥ ६६ ॥

अनुभावयितुं दशाननम् ,
प्रथमा शर्म तु दुः[1]प्रवृत्तिजम् ॥
रघुपाशुगनष्टरक्षसा -
मभवत् शूर्पनखैव केवला ॥ ६७ ॥

नासाकर्णविकर्तनात्स्वसुरथप्रेमास्पदानां वधा -
द्वीराणां खर-दूषण-त्रिशिरसान्तत्सर्वसैन्यक्षणात् ॥
निष्क्रव्यादकुलं जनाश्रयमपि श्रुत्वा ततो रावणो -
मेने मूर्धसु राघवेण निहितं वामं पदं पङ्क्तिषु ॥ ६८ ॥

**एकव्यञ्जनम् :**

नुन्नाने ननु नुन्नेनो -
ननानेनाननो नुना ॥
नानेनेनोन्न नानैना -
नानाननन ना ननु ॥ ६९ ॥

**द्विर्व्यञ्जनम् :**

ममैनोना ममे नाम ननामाऽऽनमनेन मे ॥
मानु मा ममुना मेने नाम नामनि नानमम् ॥ ७० ॥

---

1—Mss. 1, 2 (दुष्प्रवृत्तिजम्)

त्रिव्यंञ्जनम् :

नो देवा द्दानवाद्दादिविदमिदमनेनादिदेवाद्दिनेना ,
न्नोनाद्दानो न दीनादवनिदवदवाद्दवदेवान्नवेन्दोः ॥
नो देवद्वन्दिनो वा मदनदमनविद्द्वेवदेवाद्दुताद्वा ,
वन्दे दैवं ददानं नदननवमुदे मानवान्मेऽवमानम् ॥ ७१ ॥

अपूर्ववैचित्र्यभृताचमूरुणा -
निगूढमारीचपदेन रक्षसा ॥
धरात्मजा प्रेप्सितचारुचर्मणा ,
रघूद्वहो दूरवनेऽपवाहितः ॥ ७३ ॥

पलायमानो न मया विहन्यताम् ,
विचारयन्नित्यपि[1] तञ्जघान सः ॥
न चास्ति तत्किं मृगयात्रभूषणम् ,
तथाविधस्याऽऽहननं महीभृताम् ॥ ७४ ॥

समायिकोऽमोघशरेण ताडित -
स्त्यन्नसूनूच्चतरं रथंवहः ॥
धरात्मजे लक्ष्मणहेति निस्वनम् ,
निशम्य सीतातमुदापयन्ततः ॥ ७५ ॥

स रावणोलोकविरावणस्ततो ,
निलीय शैलूष इवान्यरूपधृक् ॥
जहार जेतापि जवेन जानकीम् ,
निजाश्रमाद्राहुरिवैन्दवीं कलाम् ॥ ७६ ॥

---



1—Mss. 1, 2 (विचारयन्नुत्पतित...)

स राम हे लक्ष्मण हार्य्यपुत्रक !
प्रजल्पतीं तामिति सन्निगृह्य तत् ।।
जटायुषापि क्षणविघ्नतांऽध्वनि ,
विहायसा पुष्पकमाश्रितो ययौ ॥ ७७ ॥

**क्रमस्थव्यञ्जने जटायुष उक्तिः —**

कः खगेघाङिच्छिजाजां झाञ् टे ठे डं ढ णे तिथैः ।।
दधन्नोऽपाऽफ भोमार्यलेवाशेषोसि साऽऽह ह ॥ ७८ ॥

यो लक्ष्मणो याम स तामसीताम् ,
नियोज्य चापे गुणि तामसी ताम् ।।
व्युदस्यमायां वसतामसीताम् ,
ददर्श शालाभिहतामसीताम् ॥ ७९ ॥

घने धनेन्दुप्रतिमौ वनेऽने ,
तदा तदाऽऽन्वेषण तत्परौ परौ ॥
इला इता वाशु ततोऽभितोऽभितो ,
दधादधानौ सुजटा जटायुषम् ॥ ८० ॥

**चतुःपादयमकेऽव्यपेतमादियमकं यथा :—**

स्वसन्स्वसन्तं समुपेत्य पक्षिणम् ,
समासमानं पितृरागतोऽनृणाम् ॥
विधाविधायात्मखगे विधाय तम् ,
विलूर्विलूनं स्वपदं निनाय सः ॥ ८१ ॥

---

1. Mss. 1, 2 (स्वसन् स्वसन्तं)

तदेव मध्ययमकं यथा :

स दनुजं जवतो जवतो दिनम् ,
गुरुकबन्धवनं धवनन्दितम् ॥
अभिगतं स ततः सततव्यथम् ,
पथि तमैक्षत कक्षतकः स्थितः ॥ ८२ ॥

तदेवान्तयमकं यथा :

अथ तस्य शुचेर्गिरा गिरा गिरा ,
निहतस्याद्यपरासि नासिना ॥
सखि तास्यसमा बभौ बभौ ,
सम सम्भावनकेऽकपौ कपौ ॥ ८३ ॥

तयोस्तयोद्भासि मनो मनोरथम् ,
जये जयेद्वाऽहितयोस्तयोर्व्यधात् ॥
नतस्ततस्तस्य बभूव भूभृतः ,
पुरापुरारेरिव बालिबालिने ॥ ८४ ॥

स समये समयेन समं समम् ,
तदनु दानुजदारदयं दयम् ॥
उभयतो भयतोद्यसितं सितम् ,
ततवधीदवधीदनु तं व्रतम् ॥ ८५ ॥

छाया छाया च मैत्री नृपमतमतयोर्बुद्धमानार्द्धमाना ,
तारा ताराधिपस्य हुलपतिपतिताऽभूत्तयोः सा तयोः सा ॥
सुग्री- सुग्रीववाक्यादतिबलवलनैर्वानिरैर्वानिरैर्वा ,
[illegible]भवेषुं समुदयदयनमारुती मारुरतीम ॥ ८६ ॥

सहसा- सहसा- दीव्यत्तनवो तनवोऽटवीः ॥
विचिन्वन्तोऽविचिन्वन्तो ग्रयुस्तेनाऽम्बुधेस्तटम् ॥ ८५ ॥

**द्विपादयमकेष्वपेतमादियमकं यथा :**

ग्रलब्धजानकीवृत्ताः प्लवगाः प्लवगा ग्रपि ॥
वीक्षिता विक्षितारण्य [1]विषस्मास्तस्थुरागताः ॥ ८८ ॥

**तदेव मध्ययमकं यथा :**

ग्रापृच्छितेषूग्रजवो हनूमान् ,
सम्पातिना पातितपुच्छकेषु ॥
के यूयमत्रागमने निमित्तम् ,
सम्भाव्यतां भाव्यमुपेत्य चित्तम् ॥ ८९ ॥

**ग्रन्तयमकं यथा :**

ग्रज्ञातकुलगोत्रेषु रहस्यं नैकदा कदा ॥
ग्रप्युद्राव्य[2]मतोवाच्या स्वाभिख्या सुमता मता ॥ ९० ॥

चण्डाशुप्लुष्टपत्रप्लवगकुलपतेहं जटायुर्यवीयो ,
भ्राता त्रातात्मशक्त्या शरणमुपगतस्यात्र सर्वस्य शास्ता ॥
दुर्बुद्धेर्दूरदर्शीर्वत दयिततमो यस्यकस्यापि नाम्ना ,
सम्पातिः पातितारिप्रथिततततिरिति प्राह पक्षी कपीन्द्रम् ॥९१॥

**एवमावृत्याधिक्येऽव्यपेतम् यथा :**

हृताहृताभूतनयाऽनयात्सतासतासतराममतामतामताः ॥
वयंवयंसौख्यतयातयातयानुतांनुतांद्रष्टुमितामिताः मिताः ॥९२॥

---

1—Mss. 1, 2 (विशयाः) 2—Mss. 1, (ग्रप्युद्भूव्य)

**आवृत्येकरूपतायामपि[1]आदियमकं यथा :**

सा सुमातावशिष्टादशास्यालये ,
सा सुमातापहाराय तस्येशितुः ॥
स सुमारीव तेन स्वयं रोपिता ,
सा सुमाया वलिष्ठा हि सर्वेशितुः ॥९३॥

**तथैव मध्य यमकं यथा :**

निशम्य सम्पाति वचो नतेन ते ,
समा सुरास्येनतदोन्नते नते ॥
स एक आसाऽविलजो नतेऽनते ,
दृशौ दधद्रागयुते नतेनते ॥ ९४ ॥

तदायते यतेन्द्रियस्य मारुतेरुतेनते ,
प्रगच्छतोऽच्छतो[1]ऽम्बुधेश्च खेश्रिता श्रितायते ॥
सुलंध्यताऽ[2]ध्यतालनेन कादशा-दशानने
ह्युपस्थिते स्थितेव दुष्टमानते नवेऽपरे ॥ ९५ ॥

**( एतत्सर्वमव्यवहितावृत्तव्यपेतयमकंदर्शितम् )**

**अथ चतुर्थपादेषुव्यपेतमादियमकं यथा :**

क्षणवारिधरः पयोनिधौ ,
क्षण सोढप्रतिरूपिका ग्रहः ॥
क्षणदाचरराजरक्षितां ,
क्षणतः प्राप पुरी स रक्षसाम् ॥ ९६ ॥

---

1—Mss. 1, 2 (माप)
2—Mss. 2 यम्बुधेः स्थाने रवुधे इति पाठः
3—Mss. 1, 2 (ख)

**तदेवादिमध्य यमकं यथा :**

समुद्रमुल्लंघ्य समुद्र या मता मशोक -
वाट्यां समशोक कर्षिताम् ॥
निशाघणा[1]ऽभां स निशाचरीं कपि -
स्तरूस्थले तां सुतरूस्थ ऐक्षत ॥ ९७ ॥

**तदेवान्त यमकं यथा :**

किमादाय तच्छोकवह्नि वनौका ,
ददाहेति ह्राहेति तां सावनौकाम् ॥
निशम्याऽऽगिरः क्रोशतां क्वाबनौका
यतो रावणोऽमंस्त मान्यावनौका ॥९८॥

**तदेवमध्य यमकं यथा :**

ममम नोभ्रमएषकिमुच्छिखो ,
न दहनोऽभ्रमयं न तदुत्थ [2]भ्रा: ॥
सदसि नो भ्रमतीति हि भूभुवो ,
भवति नो भ्रम एष शुचोऽनलः ॥ ९९ ॥

**तदेवाद्यन्त यमकं यथा :**

दारुणाग्निरिति नातिदारूणा ,
कर्मणो वदन्ति ते विकर्मणः ॥
सोर्मिका रघुवरस्य सोर्मिका -
मग्रहीद्धनुमतोऽभ्रमग्रहोः ॥ १०० ॥

---

1—Mss. 1, 2 (निशाचरा...)
2—Mss. 1, 2 (तदुत्थितः)

तदेव मध्यान्त यमकं यथा :

समयमिह कियन्तं तिष्टमामानयन्तं ,
रघुपतिमृषिवेशं देवि शीघ्रं तवेशम् ॥
विभृश कुरू निदेशं यामि यातेऽस्य देशं ,
स्वमतमगिविशेषं प्रत्यभिज्ञानशेषम् ॥१०१॥

आदिमध्यान्तयमकं यथा :

सुवेगवान्मानसवेगतोऽसवे ,
सुतस्य राज्ञः कसुतस्ततोऽसुतः ॥
विदग्धलंको[1]दिविदर्थकोविदो ,
[2]मदर्शयद्राममदोऽश्मसोऽमदः ॥ १०२ ॥

त्रिपादयमकेषुव्यपेतमादियमकं यथा :

नतया सतं प्रहितमाशु तयो -
र्न तया निधायहृदि भूमिभुवः ॥
नतयामिनीशचरितस्य तदा -
ऽमलसंगमं मनसि मानभृतः ॥ १०३ ॥

1—Mss. 1, 2 (लंकोऽपि) 2—Mss. 1,3 (ऽप्यदर्शयद्राम)

रामारण्यगमानुजागमधरापुत्रीहृतिप्रोल्लस -
द्दुर्गादत्तसुशर्मपानकवरोपुत्रस्य तीर्थे कुरोः ॥
सर्गः श्रीरणवीरसिंहविभुनादिष्टस्य संवासिन -
श्चण्डीदासकवेः कृतौ तु नवमः सम्पूर्तिमायात्सुखम् ॥१०४॥



श्रीमन्महाराजाधिराज- जम्बू-काश्मीराद्यनेकदेशाधीश
श्रीरणवीरसिंहवर्मादिष्ट- श्रीकुरुक्षेत्र-मध्यरेखाँतर्गत
पुण्डरीकपुरप्रसिद्ध - सवालवंशावतंस
श्रीदुर्गादत्तात्मजनव्यचण्डीदासकविकृतौ
"रघुनाथगुणोदये" महाकाव्ये
रामारण्यगमनभरतांगमसीताहृतिसुग्रीवसख्यादि-
वर्णनो नाम नवमः सर्गः ॥ ९ ॥

———

ॐ

श्री रघुनाथगुणोदय- महाकाव्ये

# दशमः सर्गः

श्रीः

महार्णवं तत्परिखात्मतां गतं ,
महार्ण संवीक्ष्य विवोध्य रावणं ॥
तदात्तसीता परिसंगमोत्सुक ,
स्तदात्तचापः स पुरः प्रतस्थिवान् ॥ १ ॥

कुतोऽप्यनारुद्धपथाः प्लवंगमाः ,
कुतो विकर्षन्तइवाभितो वरम् ॥
वलोत्कटा उत्प्लवितो भटा इव ,
ययुर्युयुत्साधिमुदस्तमन्दयुः ॥ २ ॥

तमन्वयद्भिः क्षमयाम्बभूवे ,
गतैः सचित्रैः रमयाम्बभूवे ॥
न केवलं तैर्भुवि सम्बभूवे ,
दिवेऽपि सम्बाधमयाम्बभूवे ॥ ३ ॥

चलप्लवोद्वीचिमरुद्भवभ्रमाम् ,
महारयां वेगविभिन्नभूरुहाम् ॥
संवाहिनीं वीक्ष्य भगीरथो यथा ,
कृतस्वतारे मतिमद्धि भूरुहाम् ॥ ४ ॥

किमु चिरं शुचिरं रुचिरं वचो ,
रघुपतिं स्वपतिं स्थपतिं तथा ॥
इति मतं स्वमतं विमतं मनाक्-
[1]यवनजो वनजोऽवनजोऽवदत् ॥ ५ ॥

सारमेतदिति सारधिबन्धे ,
सारकाय परिसारय सेनाम् ॥
सारसन्त्युलसारनिरुक्ता ,
सारमालिमतिसारमबन्धीत् ॥ ६ ॥

विभीषणाय श्रयतेऽक्षणाय ,
विचक्षणाय श्रियमक्षणाय ॥
सरावणाय क्षितिमीक्षणाय ,
प्रतीक्षणाय स्वचलद्रणाय ॥ ७ ॥

स तेन साकं मनसाऽपि दुर्गमाम् ,
समानसारेण न सारुणोऽरुणात् ॥
किमानसातां हि न सामभेदनात् ,
सुखेन साध्यो घनसारवानपि ॥ ८ ॥

---

1—Mss. 1, 2 (मनाक पवतजो....)

यदा रघूद्वहोऽरुणत्पुरीं दशाननस्य ताम्,
तदा तदा कपी कपीश्वरोऽश्वरो न तां नताम् ॥

सुमेनिरे शितैरमोघवीर्यरामसायकैः,
सुरासुरावणं वणं क्षणे क्षणे हृतं हतम् ॥ ९ ॥

ततो दशास्यस्य पटुप्रबोधने,
धनेन सन्तर्पित मानसोऽध्वगः ॥

समेत्य कुम्भश्रवसं शयालुकम्,
सुसत्वरं जागरयाञ्चकार तम् ॥ १० ॥

युग्मम्:

रामानीकं लंकोपान्त्ये,
विलसति वरमति विलसति वरमति ॥

सीताचित्तं रामक्रोड़े,
वररुचि रसवति वररुचि रसवति ॥ ११ ॥

अन्यां पश्याप्यद्येत्यस्या,
मति मति [1]जित जित रति रति ॥

मनु ममु तामूचे का वीक्ष्योद्वेगा-
दति दति विधि विधि रिति रिति मय मय ॥१२॥

खनिर्धूत देवौघ पश्य लङ्कां शृणुष्व किम् ॥
अशोकवाटिकायां त्वं प्रतिशालमयं ध्वनिः ॥ १३ ॥

---

1—Mss. 1 जित शब्द एक वारमेव समुपन्यस्तः

सदा सुवर्णेन विभासमानया ,
समानया शं विनमद्विशालया ॥
विशालयाऽमंस्त यया समालया -
त्समालयाद्यवृता[1] वनौकसाम् ॥ १४ ॥

सदा बबाधेऽत्र खगैरिवास्रपैः ,
सदा बबाधेऽत्र खगैरिपास्रपैः ॥
सदा बबाधेऽत्र खगैरिवास्रपैः ,
सदा बबाधेऽत्र खगैरिवास्रपैः ॥ १५ ॥

नवने नवने तरिमा तरिमा ,
विनते विनते नवले नवले ॥
नवरे नवरेऽपि शुने पिशुने ,
मतदाम तदामिषतां मिषताम् ॥ १६ ॥

तत विविध [2]धराराममन्यत्पकाका[3] ,
गगननववनानातत्ततज्यज्यजाजा ,
ललन नतत यायाऽऽससभ्यभ्यसासा[4] ,
कुकुर रममनाना ननत्व[5] त्ववावाः ॥ १७ ॥

जिता न किं विश्वजिता सभाजिता ,
जिता भवेत्केन जिता विना जिता ॥
जितामरस्य विजिताधुना जिता ,
न वाजिता सामजिता न वा जिता ॥ १८ ॥

---

1—Mss. 1, 2 (समालयाघाववृता...)
2—Mss. 1, 2 (धरा सा) 3—Mss. 1, 2 (पताका)
4—Mss. 1, 2 (स ससभ्य) 5—Mss. 1, 2 (न न नत्वत्व)

सुनयाऽसुनया नीतां ,
सीतां सीतांगके प्रयाते याते ॥
या या या यास्यति नो भूमीं ,
भूमींदिरांत्वमेतामेताम् ॥ १९ ॥

वलं नदमितं मितं कषमतम् ,
मतं सुवकुलैः कुलेर्भुजभुजः ॥
कपिशितिभुवां भुवां ज्वलनता -
ऽनतातवपुरोधिज्वलति ॥ २० ॥

एवमाभाष्यमाणस्य रावणस्य पुरः पुरे ॥
सुग्रीवस्तिष्ठतोऽकस्मात्मेरुश्रृंगमिवापतत् ॥ २१ ॥

**अथ गोमूत्रिकया सुग्रीव रावणयोः पुरा युद्धम् :**

सुखान्धमेरावणगुत्ससाद-
ङ्गतैर्विचित्रैः पुरसिक्थ भाजनम् ॥
सुकन्धरो रावणमुत्ससाद ,
स तैस्सचित्रैः पररिक्थ भाजनम् ॥ २२ ॥

**अथगोमूत्रिकाबन्धस्वरूपम् । अस्कादेवाश्वगतिचित्रमपि ।**

**अथाश्वगतेः स्वरूपं थायुग्मम् :**

विजृंभिते दिक्षु ततो रघूद्वहः ,
दशास्यनाम्नोर्जयघोषणे रणः ॥
शिलागशैलैः परिघैममुद्गरै -
[illegible] ॥ २३ ॥

शिला विधूर्णीकृतमुद्गरो मही ,
रुहाय विद्धापरिघो महीधरैः ॥
विमर्दितामत्तमतंगजाधिपो[1] -
ऽधिकोपतः प्रावृतभीमकर्मणाम् ॥ २४ ॥

विखिद्यमानेऽतिततो दशास्ये ,
सुरेशजेता न सुरेशजेता ॥
रुरोध रामं प्रथमो यथाब्दः ,
सहिष्णुमारादसहिष्णुमारात् ॥ २५ ॥

सुवेणुश्चालितोऽनेको वेणुर्वाद्यान्यनेकशः ।
सुवेणु[2]र्मेघनादस्य वेणुस्तज्ज्यारवोऽभवत् ॥२६॥

हनुमानेक एवाजौ तत्र संस्मृतराक्षसैः ।
राक्षसैरावृतोऽनेकैरेकैकं विजघान ह ॥ २७ ॥

महीमहीनासुमहीमहीधराः ,
परम्परां प्राप्य परंपरांगता ॥
मता ध्रुवत्वं ध्रुवमित्यनुश्रिया ,
श्रियापरायां न्त्वपरान् पदीरितुम् ॥ २८ ॥

समुद्वहन्नाशरचारू चापं ,
समुद्विपन्ना शरचारूपापम् ॥
दक्षोभिदक्षोभिणमुग्रगोपा ,
ल्लंकाकलकाकलकोग्रगोपात् ॥ २९ ॥

---

1—Mss. 2 मतंगजाधिपा इति पाठः

2—Mss. 2 मोघनादस्य इति पाठः

तेनानीता नीता तेना ,
लोके यामे यामे लोके ।।
कीशा वीशा वीशा कीशा ,
नुच्चै सेनासेनानुच्चैः ।। ३० ।।

तत्रासुस्तत्र समदा ,
गजा गम्भीरवेदिनः ।।
भग्नोरूकंधराः कुध्रे -
र्वानरेन्द्रकरच्युतः ।। ३१ ।।

**गजगतिस्वरूपं यथा :**

तत्र तत्रासुरा रक्ताः ,
प्लवा नन्दा नदीनदा ।।
दशाननस्य भावान्य -
हिता समापगा सुरा ।। ३२ ।।

**राजगति स्वरूपं यथा :**

विलोक्यरामाहतमात्मनोऽखिलं ,
बलंविषण्णोऽपुनरुत्थितिश्रमम् ।।
ततश्च तच्छोणितमाशु भूभुवे ,
समायिकं रामशिरो न्यदर्शयत् ।। ३३ ।।

तदुपवीक्ष्य धरातनयाचिरा -
न्निजतनूतपसातिसिसृक्षती ।
अपि पराभवतोऽत्र सुसत्वरा ,
त्रिजटयाऽऽजटयेति निबोधिता ।। ३४ ।।

---

1—Mss. 1, 2 तत्र तत्रासुररक्ताः

भवन्ति ते सदादेहाः पतेर्भक्ति भवन्ति ते ॥
त्रिपूर्वया पतेर्भक्तिः सदादेहा त्रिपूर्वया ॥ ३५ ॥

**अथ नागबन्ध श्लोकः :**

गीर्वाणेस्य जेता हतनिखिलबलव्यूहमा[1]स्वस्य रामम्,
तिग्मत्रिश्वाय भीमश्शशमिव सबलं मां विहस्यारिदाहम् ॥
नागास्त्रे राममन्यं त्रिनयनयजनस्त्वं मनोजेद्धमानि,
निर्भीरित्यस्वमागा[2]स्वमदिमियितिरो [3]मुद्धयन्मानदुर्वाक् ॥ ३६ ॥

ततश्चिरारुद्धकलम्बशम्बरम्,
प्रभूतसम्पत्- प्रसरव्ययोऽनदत् ॥
इतीव रोषाच्छरदभ्रवत्पुनः,
स मेघनादस्य धनुर्मुहुर्मुहुः ॥ ३७ ॥

बभौ मुञ्चञ्शराम्भासि सोऽधिविस्फारयन्धनुः ॥
कीलालबुद्बुदोद्भासी प्रावृट्काल इवाभितः ॥ ३८ ॥

सा त्रिजटायै पुष्पकवेद्या-
माशु निवेश्यादर्शयदारात् ॥
तौ रणभूमावेव शयानौ,
भूतनयायै पङ्क्तिमुखस्वत् ॥ ३९ ॥

---

1—Mss. 1, 2 (माश्वास्य) 2—Mss. 1, 2 रिश्वश्व
3—Mss. 1, 2 (मर्दयन्)

**अथ चतुष्कासनबन्धपद्यम् :**

मेघनाददुःस्सहेऽत्र कालिकाधिकालिमे ,
मेलिका मनोविनोददायके भयाधमे ॥
मेधया जितप्रियामिमां समीक्ष्य कानने ,
मेनका समाव्यथाद्यमाक्कथा विनाद्यमे ॥ ४० ॥

**अथ चतुष्कासन स्वरूपं यथा :**

"इदमेव चतुष्कासनचित्रमुपरितनरेखाचतुष्टययोगमन्तरेण डमरुद्वयनाम चित्रं भवति ।" तस्य स्वरूपं यथा—

समयमुभौ धरणीसुता विशिखगणैर्दलिततनू ॥
पतितुमना भुवि विदयेत् परमुदरोध्य मतितया ॥ ४१ ॥

भाति सुवर्णा पश्य सुगात्रि ,
भालगता सास्याक्षरपङ्क्तिः ॥ ४२ ॥

वक्त्रच्छाया विलसति तथा हस्तश्रीरप्यधिकरुचिरा ॥
भांन्त्यङ्गानि प्रचुरमुभयोः शङ्काङ्कां चिंत्यजनकजे ॥ ४३ ॥

भवति यदास्यं द्युतिमत्करकांतिश्चापि चरणयोर्विमला ॥
यस्य भवेत् सुचिरायुर्विज्ञेयश्चेत्प्रशसन्त्यार्याः ॥ ४४ ॥

हंस स्वनेऽधिकामुभयोरपि द्वयोः ,
बाहुद्वयी शुभमति सुप्रभावती ॥
संदृश्यते च विलसदङ्गयष्टिका ,
शोकं जहि छलरहितं वचो मम ॥ ४५ ॥

श्रुत्वा तद्गिरमुपधिप्रयोगहीना -
मालोक्यापि च सरसं स्वयं विशेषः ॥
दम्भोदध्वनिमुरुकेकिनीव साभूद् -
भूपुत्रीप्रतिपदमाप्रहर्षिणीद्वा[1] ॥ ४६ ॥

स्वागतास्मि सखिसार्धमिदानीम् ,
निर्व्यलीक - मनसात्रभवत्या ॥
यद्विलोकि रघुनाथपदाब्जम् ,
गच्छ कोऽस्य जगतीह विजेता ॥ ४७ ॥

**अथ सचर्मासिबन्ध श्लोकद्वयीपुरा खड्गस्थः :—**

ततो वनौकसस्तौ[2] ते तेऽभिमतः सममासत ॥
समन्तात्केमतारम्भा भवभावनभासुराः ॥ ४८ ॥

**चर्मस्थः :—**

वताभरंभाससतः सुराक्षसा ,
सखड्गचर्माङ्कित- हस्तबन्धुरा ॥
रामस्य सैन्यं प्रतिहन्तुमुद्यता ,
स्तेऽभुश्चसातः समभावरम्भता ॥ ४९ ॥

**अथ वृक्षबन्धस्थः श्लोकः :—**

तम्मतं राक्षसौघं मद्गलितधियं दम्भचर्य्याप्रवीणम् ,
भद्रश्रोणिप्रतीपं द्रवदलितधरं वन्यवृत्तोति हन्तुम् ॥
न्यञ्चन्तं कीशमात्यं बलमभिविधिवद्रक्षितुं रामचन्द्रम् ,
भव्यालिप्राप्तशोभं दवतरुभिरिदं मञ्जयामास तां तम् ॥ ५० ॥

---

1—Mss. 1, 2 (प्रहर्षिणी वा) 2—Mss. 1 वनौकत इति पाठः

**अथ वृक्षबन्धस्वरूपम् :**

**अथ नागोत्सादक गरुड़बन्धस्थ पद्यं यथा :**

सत्पक्षोत्पतनः स्मृतः सपदिगो गोपानपाङ्गोपगो ,
गोपाङ्गोतिमतः स्वितः कृतमतिः सर्प्पादि दर्प्पासितिः ॥
तिग्मांशोर्महतोऽपि बन्धनमरेर्दूरस्थितेऽत्यादृतम् ,
रामोबन्धहरः क्व तत्र [1]तु सितिः प्राणोपगोपातिगोऽङ् ॥५१ ॥

क्षणविभ्रमकारिरावणे -
गरुडाऽऽलोकविलोपिका सति ॥
उरगासुमनन्यरोधि तत् ,
क्षणदा स्वप्नमिवाभवत्तयोः ॥ ५२ ॥

**अथ गरुड़बन्धस्वरूपं यथा :**

**अथ गतिचित्रे विलोमानुलोमगत्या शरबन्धपद्यम् :**

तेन नाङ्क्षिशरशास्त्रिणात्रिपः[2] ,
सोऽन्वभान्नभिदनाच्छिरोच्छ्रितः ॥
तच्छिरोऽच्छिनदभिन्नभान्वसोः[3] ,
पत्रिणस्त्रिशरशङ्क्षिना न तैः ॥ ५३ ॥

सलक्ष्मणेनोल्लसिताग्रचलक्ष्मणा ,
महाप्रयत्नेन कृतोरुसाहसः ॥
भुजोपधाने रुधिरोच्छ्रितेशये ,
चिराय निद्रां गमितोऽस्त्रचाटुभिः ॥ ५४ ॥

---

1—Mss. 1, 2 (त्वसिति) 2—Mss. 1, 2 (त्रप)
3—Mss. 1, 2 (भात्यसी)

ततोऽनुजं क्रोधपरिस्फुराधरो ,
रणाय कुम्भश्च[1] वसन्दशाननः ।।
प्रबोध्य स [3]प्रैषयदत्तवानरो ,
निगृह्य लंकामविशत्कपीश्वरः ।। ५५ ।।

ततः स तेनोर्ध्वमुदञ्चता स्वसुः ,
समानतोऽकारि स राममावृणोत् ।।
किमीदृशा जीवनतो पुनर्यथा ,
गभीरटंकारितगैरिको गिरिः ।। ५६ ।।

सनिर्दयेनाऽसमये प्रबोधितो ,
धियेति मामेव मितीयिवानयम् ।।
दयालुरेषोऽतिदयालुरागतम् ,
शरैः स निद्रां महतीमशीशयत् ।। ५६ ।।

अपरेऽप्यपतन्निशाचराः ,
प्लवमानाः प्लवकोटिषूद्धता ।।
रजसां निकरा इवाजिभू -
च्चलितास्तद्रुधिरापगासु ते ।। ५७ ।।

हतप्रवीरोऽपि ततो दशाननो ,
चलत्समाधाय मनो मनोरथम् ।।
जये दधन्तं हि भयेन नात्मनो ,
व्ययेन वीरोऽसुलयेऽपि मुञ्चति ।। ५८ ।।

---



1—Mss. 1, 2 (कुम्भश्रवर्स)    2—Mss. 1, 2 (प्रैषयदत्र)

तमागतं वीक्ष्य निवर्त्य राघवम् ,
समग्रहीत्सस्पृहमाशु लक्ष्मणः ॥
[1]श्रवणान्मदं मत्तमतङ्गजाधिपम् ,
मृगेन्द्रशावः क्षुधितो यथाचिरम् ॥ ५९ ॥

प्रहरतोरपि तत्र परस्परम् -
करटिनोरिव रावणरोषवित् ॥
सपदि लक्ष्मणमाप विभीषण -
स्त्यजति बन्धुर पिच्छलरोषिणाम् ॥ ६० ॥

अपि तमार्यमनार्यतमं गुणै -
र्विनमिताग्रतनुः प्रथमं शरैः ॥
ननिमिवाऽविदधत्स उपाचर -
द्भवति तादृशि सैव समर्हणा ॥ ६१ ॥

तं जिघांसमपि स्वीयं
क्रोधसंरक्तलोचनम् ॥
लक्ष्मणो मोघया शक्त्या
स्वयमान्तरयत्तदा ॥ ६२ ॥

---



1—Mss. 1, 2 (स्रवन्)

**अथ शक्तिबन्धस्य श्लोको यथा :**

चण्डज्वालानलाभां चदस्ति[1] मुहुरसौ भ्रामयित्वोग्रपाताम् ,
तेतेऽमोघशक्तिं नभसि सुरगणे रावणं चाधिरोचम् ॥
चन्द्रास्यं वीक्ष्य रामानुजमिति न मुधामानवादोयमेवम् ,
बन्धौ नोमानवेयत्स्वितमिदमधुना मुष्टिबन्धादमुंचत् ॥६३॥

**अथ शक्तिबन्धस्वरूपं यथा :**

ततः स तेनोरसि ताडितोभृशं ,
महीध्रकल्पेन रुषा बलीयसा ॥
तया सुमित्रातनयो विचेतनः ,
पपात हाहेति पदैर्वनौकसाम् ॥६४॥

मरुत्सुतो मारुततुल्यवेगतः ,
करद्वयेनाशु निपात्य रावणम् ॥
निधाय चांके शिविराय लक्ष्मणं ,
ततः समक्षुदपतन्महोजसा ॥ ६५ ॥

तमागतं वीक्ष्य रघूद्वहो रणा -
न्निमीलयन्तं नयनेति विव्यथे ॥
विदोपि सौभ्रात्रमलं न कर्षति ,
तथाविधेऽनेहसि कस्य मानसम् ॥ ६६ ॥

**अथ गतिचित्रेषुगतप्रत्यागतया रामरावणयोरन्ययोर्वा कयोश्चित् प्रश्नोत्तरं याथा ॥**

तमसा मतसोत्तंसं सन्तं के तत्क्षणात्क्षतम् ॥
तं क्षणात्क्षतकेनं संसंतं सोतमसामत ॥६७॥



1—Mss. 1, 2 (चरति)

**अथ गतप्रत्यागतचित्रं श्लोकान्तरोत्पादकं यथा :**

तम्मे शक्त्या भर्जिताङ्गोऽवगन्तुं ,
नाथे रक्तो युक्ति शंकंदगानाम् ॥
सामानद्धो युद्धविद्या न माता ,
धीरापत्यो[1] सर्वसर्वाधिमासा ॥६८॥

**अत्र प्रतिलोम्येनान्यः श्लोको यथा :**

सामाधिर्वा खर्वसत्योपराधी ,
तामानद्याविद्धयुद्धोनमासा ॥
नागादङ्कं शक्तियुक्तोरथेना ,
तुंगं वङ्गोर्तजिभक्त्यासमेतम् ॥ ६९ ॥

निपात्य सौमित्रिमथो वदन्निति ,
हतस्य देवेन्द्रजितोघुना विधिः ॥
गतः सुपूर्ति ननु सांपरायिको -
ऽनुजस्य तु श्वोऽन्यवधाद्भविष्यति ॥७०॥

विवेश लंकां पिशिताशिनां पतिः,
प्रलापपूर्णाभविदन्निजायतिम् ॥
वदन्ति लब्धायुरुपात्यकोटयो ,
यथा तथा [2]वाचमनर्गलां हिते ॥७१॥

---

1—Mss. 1, 2 (धीरायत्यः)

2—Mss. 1 (गिरः) इति पाठः।

गते दुर्जने मारुति [1]भीरुतोग्र,
[2]प्रयोतेर्गिरेः श्रृंगमुत्पाट्य वेगात् ॥
स दिव्यौषधी दीप्यमानं पुरस्तात्,
प्रशस्तानतो राघवस्य न्यधात्तत् ॥७२॥

**अथ महौषधये हनुमतानीतं महोदयाचलशिखरं तदेवध्वित्रम् प्रभुकविनामांकितंतत्रस्थंश्लोकद्वयं यथा :**

महोदयस्तदा श्रमीन्मारुतेः कणवत्करे ॥
रेजे वीक्ष्य तु तच्चित्रं कस्यारेर्नमनोऽनमत् ॥७३॥

जम्वू कामविहारिनाथरणभृत्कीरांगनं निर्व्यथो,
व्यस्तावेः शिखरं सुषेणतदियं वागाच्र्यकाश्मीरजैः ॥
भाले वीरवलीरुचं न कतमस्यात्माकृते राकरो-
त्तांतंसौरेह[3]हास यस्य च गिरं संजीवनीं त्वं हरेः ॥७४॥

**अथ पर्वतशिखरबन्धस्वरूपं यथा :**

पुनस्तदानीतमहौषधोदितैः,
प्रधान शिष्यैरिव तेन मार्गणै- ॥
रपाठि लंका बनितागणोद्धं,
विलाप भाष्यं प्रतिशालमादरात् ॥ ७५ ॥

अथ कुथमण्डितं करममीक्षणगोचरतां,
स्थितमुपनीय राजभवनप्रतिहांरमुखे अयं ॥
जय जह्यनार्य्यमिह सदस्रप पूज्यकुलैः,
स्तुत इति संयुगाय पुनरेत्स पुलस्त्यभवः ॥ ७६ ॥

---

1—Mss. 1, 2 (रीरितोग्र)    2—Mss. 1, 2 (प्रयाते)
3—Mss. 1, 2 (सौरम)

चर्चरीकमिवाद्यलोक इयन्तु रामवरूथिनी ,
चर्चरीकविजोभितो यमरावणकिमरामकः ॥
चर्चरीकसुवृत्त आशु भविष्यतीति कृतश्रवा -
श्चर्चरीकसमान तद्युतिरब्रवीत्स दशाननः ॥७७॥

**गत प्रत्यागतजात्या रावणोक्तिर्यथा :**

येन तानविवादे नो देवा मे विदितानते ॥
वान मारनवामे ये के ते वानरमानवाः ॥ ७८ ॥

**कमलव्यूहपर्यायकमलबन्धने रावणं प्रति रामोक्तिर्यथा :**

स्वतो बरतो भीतो रणवाणरयेन[1] ये ॥
रयीत्वयीरकेतेऽके[2]रसन्यासे रतिष्यति ॥ ७९ ॥

**अथ कमलस्वरूपम् :**

**अथ सर्वतोभद्रेण लक्ष्मणं प्रति रामोक्ति :**

का सेना मम नासेकासे द्धमाद्य द्यमाशसे ॥
नामारास सरामानामद्य सज्ज्ञसद्यमा ॥ ८० ॥

**अथ सर्वतोभद्रस्वरूपम् :**

**अथ रावणकृतकमलबन्धपर्यायाद्यकमलव्यूहः कमलस्य पद्यं यथा :**

यातया कंजविवयाया धवित्री मदामया ॥
यामदायुयुधेसा या यासाधेस्सोभ्ययात्तया ॥ ८१ ॥

---

1—Mss. 1, 2 (रवेण) 2—Mss. 1, 2 (केः)

**अथ तत्कमलव्यूह स्वरूपं यथा:**

**अथ रामकृतमत्प्रतिकमलव्यूहस्थ: श्लोको यथा :**

वानरैः स्वापि समवा वामदक्षभयाहवा ॥
वालिजाद्यग्रसुग्रोवा वाहिता सापि सद्भवा ॥८२॥

**अथ कमलव्यूहस्वरूपं यथा :**

विजृंभिते राममहिमांशुमण्डले ,
निमीलनिद्रा निजसैन्यपंकजे ॥
वदंस्त ते वान्यदिवेति संदधे ,
प्रचण्डचण्डांशुरिवाभितो ज्वलन् ॥ ८३ ॥

**अथ तत्कमलव्यूह श्लोक :**

वहिसेव[1] वहिर्याहि -
वहिर्वाहिवहिर्जहि ॥
वनेस्खेने वनेर्याने ,
वनेर्वानिवनेर्जने ॥ ८४ ॥

**अथ व्यूहस्वरूपं पद्यं यथा :**

**अथ तद्भिन्नंवीक्ष्य रावणो गोमूत्र गत्या पुनः श्रेणीं बबन्ध सश्लोको यथा :**

सत्रबन्धामयद्रामबाणकीलालवेगतः ॥
सम्बबन्धमदाद्राजीं वांत्तकीद्वलवेगतः ॥ ८५ ॥

1—Mss. सेवहि इति पाठः

**अथ गोमूत्रिका श्रेणी बन्धस्वरूपं यथा :**

**अथ वानरेन्द्रकृतव्योमव्यूह पर्यायव्योंमबन्धस्यपद्यं :**

तां तां रामप्रियदुतराव्योमगा भेजिरे ताम् ,
बाणोर्भावैरतुलविटपैरुत्प्लवा वानरा वा ॥
के तां द्यामद्वयद्यद्रुधराभीमगा भेदुरेके ,
प्राणै रावैश्चतुरविटपैरुत्प्लवावातवाप्राः ॥८६॥

**अथ व्योमबन्धस्वरूपं यथा :**

स्वश्रेणिमुरुरामकामविशिखैरामर्द्दितामाथताम् ,
सुश्रोणीमिवसुंभृतांसुवियुतामाज्ञाय कांतार्थिनीम् ॥
चक्रेचक्रमतींनिनाय विधिना ज्यायानिवासौतदा
बन्धज्ञेस्वरभासुरेरचनया तां कामिनीकारवम् ॥८७॥

**अथ रामस्यतद्वंधाय २ पर्यायसशरधनुर्व्यूहपद्यं अथा :**

रामो मोघतरैः शरैरधिविधिन्यासैरुदारैरलं ,
लंकेशस्यललाव चक्रमचिरात्संतर्ज्यतंराक्षसम् ॥
संदग्धारिपुरी च येन विजयेनायातितस्मिन्समो,
मोदीबन्धवरंसुबाणमगलं चापंचमत्कारयन् ॥ ८८ ॥

सा समीहे सुहृद्राम बाणभिन्नापरश्रियम् ॥
सासमीहे सुहृद्राम बाणभिन्नापरश्रियम् ॥ ८९ ॥

पुनः सेनां समास्वा[1]स्य दर्शयन्निजपौरुषम् ॥
चिकीर्षुर्नलिनीव्यूहं कूटालिगति सोऽदिशत् ॥९०॥

---

1—Mss. 1, 2 (समाश्वास्य)

अथ धनुर्बन्धस्वरूपं यथा :

अथ कूटयुद्धार्थं रावणविहितनलिनीव्यूहपर्यायतद्बंधस्य पद्यम् यथा :

रामालिङ्कालिगत्या विहितततहविवृद्धिरीत्यापसारा,
रासापत्याप्रवेशावसरररसपद्दत्तपृष्ठाभिसारा ॥
रासाभीष्टान्कपीन्द्रा[1]मुभयपयमनुत्स्वावगत्यापकारा,
राकायत्यानुगत्यावदतितितिदवध्रानदङ्कालिमारा ॥६१॥

अथ नलिनीबन्धस्वरूपं यथा :

अथ प्रतिदिग्रावणनिबद्धनलिनीव्यूहभेदिकापि विविडित्त चक्रव्यूहपर्यायतद्बन्धस्य पद्यम्। यथा :

गानताजयवाडिष्ट न कतायमवाष्टगा ॥
नलिनीः कपयो जघ्नुः समं विविडितारिणाः ॥६२॥

अथ विविडितचक्रबन्धो यथा :

अथ मुरजबन्धस्थः श्लोको यथा :

सेना कीशकुलापन्ना पिनाकीशकलापहा ॥
कामुकीशकलापन्ना कामुकीशकुलापहा ॥६३॥

अथ मुरजबन्धस्वरूपम्। यथा :

ततः सा प्रषिता तेन राक्षसानीकिनी पुनः ॥
अभिरामं रयेणाप वार्षिकीव महानदी ॥६४॥

---

1—Mss. 1, 2 (नुभय)

**मयरसतजभनलगैः छन्दोक्षरैरेव यथा :**

स मानिनीं मानगरीयसीं गिरा ,
सुरारिसेनां सरसः समागमे ॥
स मानयन्मानिजनेन मानिता -
ममीमिलन्मानभरानतानम्[1] ॥ ९५ ॥

**सरिगमपधनीति षड्ङ्गादि सप्तस्वराक्षरैरेव यथा :**

सारिमागध मनींधमासरा ,
सामगानसरसासमानना ॥
रामधामगरिमाधिमानिनी ,
साप पापपरमाद्य भात्ययम् ॥ ९६ ॥

**निष्कण्ठ्यं ह्रस्वस्वरचित्रम् :**

रुरुधुः प्लुतिभिर्वृत्तिं मुष्टिभिर्विभिदुर्युतिम् ॥
दुधुधुर्जिष्णुजिदुरुधृतिं युञ्जिमुनिश्रियि ॥ ९७ ॥

**लङ्काप्रान्तं पश्यतो रावणस्योक्तिः :**

शङ्कां मुञ्चल्लङ्कां कङ्कां कं कं काङ्गां कां कं कांतिम् ॥
शान्तिं मुञ्चन्तं स्वाञ्चंस्तं तंसोंऽतं स्वम् ॥ ९८ ॥

---

1—Mss. 1, 2 (नताननाम्)

2—Mss. 1, 2 ( मं )

**सर्वदैर्घ्यैकस्वरं यथा :**

शैवै रैशैर्दैवैर्दैत्यैर्वैश्वैः पैत्रैर्मैत्रैर्जैत्रैः ।।
वैधैः सैद्धैर्वैदैर्वैर्वैप्रैर्वैशैर्नैकैरैदैरैद्वैः ।। ९९ ।।

इत्यालोच्य ततस्तूर्णं रथमास्थाय सायुधम् ।।
पिपित्सू रामबाणाग्नौ स पतङ्ग इवाद्रवत् ।। १०० ।।
अरथं राममाज्ञाय रथं जैत्रं पुरन्दरः ।।
अभेद्यवर्मणा सार्द्धं प्रेषयत्प्रणयात्तथा ।। १०१ ।।

**रामाय रथं ददन्मातलिः त्रिपादगूढेन पदेन रामं प्रत्याह :**

(गूढानि पदानि) :—

सदा ते राम सम्भूतिः सम्भूतिस्ते सदामराः ।।
तेऽमरादास सम्भूतिः सदाराभूम सन्ति ते ।। १०२ ।।

रथं समभूह्य ततः सुजैत्रम् ,
सदंशनं मातलिना प्रणीतम् ।।
हरेर्दधौ तात्त्रिदशाहितास्त्रै-
रवापि यस्मिन् कुसुमोपपत्तिः ।। १०३ ।।

मत्तभेन्द्रमिवायातं तं विधूतमहाकरम् ।।
अवेक्ष्य व्यननद्रामो मृगराज इवेत्यलम् ।। १०४ ।।

**निस्तालव्यं यथा :**

समत्सरो नाक सदो नु कामुको,
वृषांकलब्धोरुवरो बलोत्कटः ॥
अबाधथा जातमदस्तवान [1]धुनात्,
सुरामबाणात्मतया फलोन्मुखम् ॥ १०५ ॥

इतीरितस्तेन सरोषहूंकृतिम्,
वहँस्ततो [2]मेषवदेक एव सः ॥
व्यथामजानन्निजशीर्षकर्तनोद्भवाम्,
दशास्यसोऽस्मितमभ्युपाद्रवत् ॥ १०६ ॥

स तस्य वामेतरदोषिदुर्मदो,
धरात्मजासंगमशंसके शरम् ॥
स्फुरत्यमीक्ष्णां निचखानखाण्डव,
तृणस्य मत्वा तदनिष्टमात्मनः ॥ १०७ ॥

रामाशुगोऽपि गतितर्जितवातवेगो,
रत्नार्थिनोरुहृतितेन विमर्द्दितेभ्यः ॥
भित्वा त्रपेश हृदयं हृदयङ्गमं त-
च्छुभ्रं विवेश वत वक्तुमिवोरगेभ्यः ॥ १०८ ॥

अशनं स्वशनं त्वस्य
मानवादस्य मानवः ॥
वदन्तमिदमन्वाह
पदभंगेन भावय ॥ १०९ ॥

---

1—Mss. 1, 2 (तवाधुना)

2—Mss. 1 "मेष" अत्र मकारो लुप्तः ।

**निरोष्ठम् :**

कर्त्राद्यर्थंयुगादस्य जातेऽन्यार्थेत्र चिन्तिते ।।
दिदर्शयिष्यते शीघ्रं नरादेष नरादताम् ।। ११० ।।

स्मरारि स्मरणं श्रेयो मुरारि चरणायवः ।।
पुरापि स्मरणोपोढ विषयो वाप्स्यसीह माम् ।। १११ ।।

**अथ प्रकृतिश्लेषः**

[1]मत स्वगौरवाख्याने मौनसम्भार सत्कृतः ।।
क्षोदीयांसो महीयांसः स्वपरश्रीमहोनुदः ।। ११२ ।।

**प्रत्ययश्लेषः**

तारालब्धशरव्याशास्तूणीरान्तर्गता अपि ।।
रामबणविषेशेण हारिणो हारमन्तरा ।। ११३ ।।

**अथ द्विगर्तभाषासंस्कृतचित्रम् :**

माणुवा न खलोत्ता तामि[2] कप्यां बलातुच्छिरः ।।
पद्वीकाकी गलाया सुमित्रो डाङ् तुदजात खड् ।। ११४ ।।

बभूव तुमुलं युद्धमन्योन्यमिति जल्पतोः ।।
तयोर्दिविषदः सिद्धान्विस्मेरान्कुर्वतोर्महत् ।। ११५ ।।

अस्त्रेणास्त्रं वाचया वाचमाजे -
मर्गिर्मार्गान्निघ्नतोर्वैस्तयोस्तत् ।।
अन्योऽन्यस्मात्तत्पराभूतिभीतेः ,
सर्वारम्भो वर्द्धमानो बभूव ।। ११६ ।।

---

1—Mss. 1, 2 (यतस्व)

2—Mss. 1, 2 "...तामि" द्विगर्तभाषायां, हिन्दीभाषायां "तामि" इत्यस्य "...वो भी" इति प्रयोगो जायते । यच्च संस्कृते "...तदपि" इति रूपेण प्रयुज्यते ।

गजयोरिव तत्र विक्रम ,
व्यतिहारेण मदावलीढयो: ।।
अभवत्परिरंभिणोस्तयो -
रविशेषो विजयोन्तराश्रयः ॥११७॥

उभयोर्विविध- क्रिया ,
प्रतिक्रिया संमुदितैः सुरासुरै ।।
सुमनोवरवृष्टिरादरा -
न्नविसेहे विहिता शरव्रजैः ॥११८॥

अथ दुस्सहकोपतोऽस्त्रपः ,
सदयः कीलकुलोपकल्पिताम् ।।
मुमुचे हत इत्युदीरयन् ,
स शतघ्नी मुदिताय विद्विषे ।।११९।।

अर्द्धचन्द्रवदनैः शिलीमुखैस्तां ,
विभज्य कदलीमिव क्षणात् ।।
आशया सहनिशाचरेशितू -
राघवोऽवनितले न्यपातयत् ।।१२०।।

ताममोघपतनां निपातितां ,
वीक्ष्य वृद्धरुषयाधिकोऽज्वलत् ॥
शुष्ककाष्ठतृणसंचये चरा -
न्निर्विकारहविषेव पावकः ।।१२१।।

प्राप्तकालमवलोक्य मातलिः ,
प्राहराममधुनैव राक्षसम् ।।
एनमुज्जहि समेत्य जिघ्नगैं -
र्यावदेष न च घोरवेलया ॥१२२॥

चिच्छेद यत्तस्य शिरोऽपिसोऽरुहत् ,
पुनस्तदेवं शतशोऽछिनत्तदा ॥
मुमोह मायेति न वीक्ष्य विव्यथे ,
भिदं सुसंधानमिवैन्द्रजालिकः ॥१२३॥

ततो धनुष्येकधनुर्धरो धिया ,
विमृश्य ब्रह्मास्तमिषुं स संदधे ॥
अगस्तिना दत्तमलं गभस्तिभिः
प्रियावियोगानलशान्तिभेषजम् ॥ १२४ ॥

मनुप्रयुक्तेन च तेन दुर्मतेः ,
शिरांस्यवित्तव्रणवेदनान्यपि ॥
महेषुणा कूर्चफलस्य वात्यया ,
महाफलानीव पतन्ति रेजिरे ॥१२५॥

शिरांसि दूरे पतितान्यपि क्षितौ ,
दशाननस्य त्रिदशामृतांधसाम् ॥
बि[1]स्वसुर्नातिमनांसि पश्यतां ,
पुनस्तदा प्रागिव संधिशंकया ॥१२६॥

अथ मुदितमनांसि स्वर्गिणां सत्कुलानि,
प्रबलरिपुविनाशाद्भूय लब्धोदयानि ॥
अकृषत मधुपाली प्रार्थितं रावणारेः
सुरभिकुसुमवर्षं राघवस्योरुमूर्ध्नि ॥१२७॥

---

1—Mss. 1, 2 (विशश्व)

विहितविबुधकृत्यं राममापृच्छ्य सम्यग्
दशमुखपरिहाणान्मातलिर्लब्धकीर्तिम् ।।

दशवदनकलंकव्याप्तताऽऽयाष्टिकेतुं ,
रथमुदितमहाश्वं शक्रपार्श्वे निनाय ।।१२८।।

शुचितमामधिगम्य विभावसोः ,
प्रियतमामथमांगलिकां बराम् ।।

श्रियमुदास्य रिपोश्च विभीषणे ,
समुमुदेऽमुमुदे तु मरे रथम् ।।१२९।।

प्रियविभीषणसूर्यसुतानिल ,
प्रभवलक्ष्मणभूतनयान्वितः ।।

निजभुजाहृतपुष्पकमाश्रितः ,
स समयात्समयात्स्वपुरीं प्रति ।।१३०।।

चित्रवृत्तमपरत्र वीक्ष्यते ,
त्वेकसर्गरचनं तथाप्यलम् ।।

तद्गुणौघ इह सिद्धिचित्रको ,
नाख्यवन्न परसर्गकारणम् ।।१३१।।

पाथोधिप्रतिरोधिसाधनदशग्रीवार्तिसीताप्तियुग्
दुर्गादत्तसुशर्मपानकवरोपुत्रस्य तीर्थे कुरोः ॥
सर्गः श्रीरणवीरसिंहविभुनाऽऽदिष्टस्य संवासिन -
श्चण्डीदासकवेः कृतौ हि दशमः पूर्ति सचित्रो गतः ॥१३२॥



श्रीमन्महाराजाधिराज- जम्बू-काश्मीराद्यनेकदेशाधीश
श्रीरणवीरसिंहवर्मादिष्ट- श्रीकुरुक्षेत्र-मध्यरेखाँतर्गत
पुण्डरीकपुरप्रसिद्ध - सवालवंशावतंस
श्रीदुर्गादत्तात्मजनव्यचण्डीदासकविकृतौ
"रघुनाथगुणोदये" महाकाव्ये
सेतुबन्धनरावणवधसीताप्राप्तिविभीषणाभ्युदयरामविजयादि
वर्णनो नाम दशमः सर्गः ॥ १० ॥

———

ॐ

श्री रघुनाथगुणोदय- महाकाव्ये

# एकादशः सर्गः

श्रीः

अथ स तेन समीक्ष्य महार्णवम्,
रवगुणं गुणवित्स्वपदं गतः ।
हरिरुवाच वचोऽवनिजामिदम् ,
स्वनवरन्नवराघव[1]रूपधृक् ॥ १ ॥

विततबाहुरिवालिसदालिका ,
पतिमिवाशु पिपासुमुपस्थिता ।
सुमुखि पश्य पतिं पयसामियम् ,
समलया- मलयादुपरुन्धती ॥ २ ॥

जलनिधिर्जवरोधसमुच्छल -
ज्जल-विभास्वरबुद्बुद्- तारकः[2] ।
मदति सेतु- लसत्प्रतिमापथो -
ऽनुकुरुते कुरुते शरदं वरम् ॥ ३ ॥

---

1 —Mss. 1 स्वनवराघव इति पाठः



2—Mss. 1 वुद् वुद् तारकः इति पाठः

जनकजेऽस्य महत्वमियत्तया ,
कथितुमीदृगसाविति सत्तया ।।
मधुरिपोरिव योऽत्र भवेत्क्षमः ,
स कतमः कतमः प्रतिपादिनः[1] ॥ ४ ॥

सुमति सर्वजगद्भिरुदप्लवे -
मुरहराऽखिललोकधरादिभिः ।।
समितितोऽस्य कणद्वयसेऽन्तरे ,
स मुदितो मुदितो स्वपदात्मना ॥ ५ ॥

सति गुरोः कपिलेन रसातलम् ,
सपदि संक्रमिते क्रतुसैन्धवे ।।
परिखनद्भिरिलां कुलजैर्हि नो ,
हयकृतेऽपकृतेऽयमुदायितः ॥ ६ ।।

त्वदधरद्युतिविद्विषि विद्रुमे ,
प्रसृतमूर्मिभिरूर्ध्वलता नवम् ॥
त्वमिहशङ्खकुलं कथमप्यतः ,
सुवलतेव लतेऽवलतेऽप्सु विलोकय ॥ ७ ॥

[2]सुगति गोत्रभिदोभयतः परात् -
क्षितिभृतोऽधिक- पक्ष- परिग्रहाः ॥
अनुभजन्ति शरण्यममुं रसा -
दधिवृषोधि वृषोत्तरकान्तरम् ॥ ८ ।।

---

1—Mss. 1, 2 ( प्रतिपादितः )

2—Mss. 1, 2 (सुदति)

द्वनरा व्यपिबत्तटिनीपयः ,
शिशिरकोमलशीकरशीतलः ॥
दिवसयौवनजाऽश्रमशम्बरम् ,
हरति ते रति ते मन[1] यौवने ॥ ६ ॥

पथि कदाम्बुभृतां मरुतां कदा ,
मम मनोधिगतीरनुवर्तते ॥
तव यथा ह्यदयं हृदयङ्गमे ,
समतया मतयानमिदम्बरे ॥ १० ॥

तटतमालविजृम्भितकालिमा -
न्वितमनन्तरवह्निवितापितम् ॥
मकरसर्पमहाभ्रमि दुर्गमम् ,
समभवेममवेक्षिणि दुर्जनम् ॥ ११ ॥

अयमकृत्रिमयाच्छतया श्रियम् ,
भजति रत्नमुखाकरतां तया ॥
इति मृषोरुगतेऽलमगाधताम् ,
प्रकृतितोऽकृतितोऽस्य तु साधुवत् ॥ १२ ॥

वयमिमे विनतभ्रु वि मानतो ,
जलधितीरमिता मुदिता समम् ॥
अपि मुहूर्ततयोश्चितशुक्तिका ,
निपततोत्पततोदितमौक्तिकम् ॥ १३ ॥

---

1—Mss. 1, 2 (तव)

कुरु कुरङ्गदृशीक्षण मुह्यते -
ऽध्वनि पराभवतः पयसाम्पतेः ॥

इयमदूढ - धराधर - कानना ,
वसुमती सुमतीह विसर्पति ॥ १४ ॥

इयमपेतभयास्त्यधुनाभितो -
म्ऽबुजदलाक्षिजन- स्थितिरार्षकैः ॥

अपि यथा स्वनिबद्धनवोटजै -
र्विलसिताऽलसितांशु तपस्विभिः ॥ १५ ॥

इह गवेषयता भवतीं मया ,
पतितमेकमितं भुवि नूपुरम् ॥

त्वदतुलाङ्घ्रिवियुक्त्यसुखादिव ,
गततमौ ततमौनमदृश्यत ॥ १६ ॥

**अथ युग्मम् :**

अपहृतासि यतो हतरक्षसा ,
स्थलमिदन्तदिमा- नतपल्लवैः ॥

तरुलतास्तव मार्गमुपादिशन् ,
घनगिरं न गिरं गदितुं क्षमाः ॥१७॥

मुहुरिमाः सुविवर्त्य शिरोधरं
सुदति दक्षिणदिग्गतिवीक्षणैः ॥

त्वदपहार विसृष्टतृणांकुराः ,
शशमृगीशमृगोततयोऽपि माम् ॥१८॥

अहमिमां लतिकां भवतीस्तन-
द्वयसमस्तवका नतमध्यमाम् ॥
तव धिया परिरित्सुरुदायित -
स्तव रदे वरदेवरताभृता ॥१९॥

इह मयाशु धनेन नवं पयो ,
विरतमेकपदं सममोचि यः ॥
अयमदूरनभः प्रकटीभव -
न्मधुरिमाधुरिमाल्यवतो गिरेः ॥२०॥

अपि कथं चिदिह स्मरता मया ,
मनसि भीरु तवातिविगूहनम् ॥
समयमुत्स्तनितान्यतिवाहिता -
न्यधिहिताधिहितानि विना त्वया ॥ २१ ॥

त्वमवपश्य किलागमनेन ते ,
सुतनुसम्प्रति सम्भृतमण्डला ॥
सहचरीव चलाब्जविलोचना -
नुभवती भवतीमभिवापिका ॥ २२ ॥

प्रतिह्विा भवती प्रतिमोदया-
ध्रुवममू प्रियसारसपंक्तयः ॥
त्वमभिदेहि गतिप्रवरा हसं ,
शृणु विदेशु विदेऽपि हगर्चना ॥ २३ ॥

त्वमनु गोदमिदं सुविधायते ,
स्मरसि सुस्मृतितन्मृगयामहम् ॥
चिरशयिष्य इहांकमुपागते ,
रहसि ते हसितेन गतश्रमः ॥२४॥

अपगभस्तिमुनेर्विमलाश्रमो ,
जलमलापगमाय महीतले ॥
दिवि व्यदक्षि मनाक्परिवर्तना -
न्निपतितोऽपतितो नहुषो भुवि ॥ २५ ॥

इदमुदंचिनि पंचमुखाक्षरो ,
भवति नाम विहारिमतं सरः ॥
मृदमृदंगरवोऽत्र पदन्तरा -
ऽऽशु गतिना गतिनापि मया श्रुतः ॥२६॥

ऋषिरिहांकुरमेव मृगैश्चर -
न्मघवताऽत्र समाधिमयादिव ॥
सपदि पंचसुरालिवरत्र के ,
सगमितो गमितो हि निबन्धने ॥२७॥

हुतभुजां परमुज्ज्वलतामयं -
तपनतप्तनिरावृतमस्तकः ॥
तपति तीक्ष्णमतोऽयमपीयते -
ऽहसुतीक्ष्ण-सुतीक्ष्णरतोऽपरः ॥ २८ ॥

वनमदः शरभंगसुशर्मणः ,
सुतनु येन समाहितशुष्मणा ॥
सममहापि च तस्य समापि सा,
सुतनुतूर्मनु पूतलमा तमूः ॥ २९ ॥

ध्रुवमुदेति समीक्ष्य समागतं,
पुनरदोऽनतचित्रपदं नु माम् ॥
समुदयद्भिरमीभिरतोऽम्बुदैः,
सुजनिकूटनिकूटमुदीक्षय ॥३०॥

भवति पश्य पुरोधिगतापि ते,
सुरसरिद्विषया विषया दृशोः ॥
गिरिकुचोच्छलितांतरिता भुवः -
सुरति हा रतिहारलतेव सा ॥ ३१॥

स समुदेष तमालवरोऽस्ति यत् -
किशलयेन मयात्र सुगंधिना ॥
नवयवांकुरपाण्डुरगण्डयो -
श्चिरचितं रचितं तव भूषणम् ॥ ३२ ॥

इदमनिग्रहभीतिसु शिक्षितो -
ल्ललितसत्वमपुष्पफले ग्रहि ॥
विपिनमत्रिमुनेरधिकोल्लसत्,
तत रुतन्तुरुतन्तु वरांडजम् ॥ ३३ ॥

निबिडमूलभुवोन्तरितासु वो -
ऽवनिभुवोऽत्र समाधिभृतोऽप्यमी ॥
मम सलक्ष्मण मादधते मनः -
किमितरेमितरेतरशिक्षकाः ॥ ३४ ॥

बररवे स वटोऽयमुरूस्त्ययः,
य इह विश्रमणाय पुरार्थिनः ॥
लसति मारकतोपचयो यथा,
सुखचिते खचितेज्यमणिः फली ॥३५॥

सरिदियं यमुनोर्मिविकस्वरा ,
भुवि भगीरथकीर्तिरिव स्थिरा ॥
स पुनरागनाय हृदा पुरा
सुमतयाऽमतयाचति सात्वरा ॥३६॥

तदिदमेव निषादपतेः पुरं ,
भवति यत्र मया विहिता जटाः ॥
गदितुमश्रुबतेति च मंत्रिणा ,
स्वसितकैस्सितकैकयि साम्प्रतम् ॥ ३७ ॥

समरतेऽत्र सदन्तरमागतं ,
समयतो धृतवालमिवात्मसूः ॥
ततरंगभुजा सरयूरियं ,
सरवमारवमाह्वयतीव माम् ॥ ३८ ॥

सुमति मेऽघ तथैव महीश्रियं ,
स प्रतिदास्यति संगरसाधवे ॥
उपगताय निहत्य खरादिकान् ,
सभवतीं भवतीमिव लक्ष्मण ॥३९॥

इति परस्परवादिनि राघवे ,
सपदि दूरसमर्थितसैनिकः ॥
अथ पुरो गुरुरुत्प्रकृतिश्रितः ,
शुभरतो भरतोऽकर्घरोऽध्यमात् ॥ ४० ॥

[1]वितरितामपि यां गुरुणा भज[2] -
श्रियमितासु युवांकमितं तया ॥
व्रतमतीव वहन्नसि धारयन्[3] ,
सुनिपटो निपटोऽयमियत्समा ॥ ४१ ॥

दशरथात्मभुवीति निरुक्तव -
न्युरुपयादवगत्य स तत्स्पृहाम् ॥
अवनतार विमान उदीक्षित: ,
स्मयतया यतयाशु दृशा जनैः ॥ ४२ ॥

लसददूरभुवा पुरतो दधत् -
पटुपुलस्त्यभवोक्तरुचा यथा ॥
रुचिरराजिवतारमवातरत् ,
स हरिना[4] हरिनाथकरे करम् ॥ ४३ ॥

गुरुमुपास्य तदर्ध - परिग्रहो -
त्तरमुदश्रुरुदश्वजताध्यपात् ॥
तदतिभक्त्यनुपोढमनूदके ,
स भरतं भरतञ्चिनि मूर्धनि ॥ ४४ ॥

स शुभदृष्टि समर्प्पणतो गिरा ,
लसदुदन्त- नियोग- सुवर्णया ॥
लपनरोमसवृद्धियुजोऽग्रहोत् ,
सुजटिनो जटिनो नमतो यथा ॥ ४५ ॥

---

1—Mss. 1 वितरितामपि यां गुरुणा श्रियम् इति पाठ:
2—Mss. 2 गुरुणा भजं इति पाठ:
3—Mss. 3 "धारमा" इति पाठ:
4—Mss. 4. हरिणा इति पाठ:

असुखबन्धरयं प्लवगेश्वरो ,
ममरणेग्रसरश्च विभीषणः ॥
निगदिताविति तेन सलक्ष्मणं ,
वसुबलं सुवलंध्य ननाम तौ ॥४६॥

तदनु तेन सुसंससृजे भृशं ,
नतमुदास्य तमेनममीमिलत् ॥
हरिजिदस्त्रमहाव्रणिनोरसा ,
समुदयामुदयान्यथ वास्य तत् ॥४७॥

प्लवचमूपतयोऽधिनिदेशतो ,
रघुपतेर्दनिर्मर्भरिणो गजात् ॥
नगपतीनिव चारुरुहुस्तदा ,
नृवपुषो वपुषोदितशक्तयः ॥ ४८ ॥

रघुवरानुमतोऽभजदस्त्रपा -
धिपतिरप्यथ सानुचरो रथम् ॥
तमिह यस्य पुरोऽधिकमायिना -
मपि रथैररथैरिव भूयते ॥४९॥

पुनरसावपि सावरजो लसत् ,
कदलिकं तमुदाप स सीतया ॥
स गुरुविद्रजनीं सतडिद्घनं ,
मतसशीतशशीव सुसांधिकम् ॥ ५० ॥

शुचिमिवापहृतां जलधेर्जला -
द्भगवता झषरूपवतोद्धृताम् ॥
रघुवरेण दशाननदुःखतो -
ऽवनिभवां निभवां भरतोऽनमत् ॥५१॥

जनकजा पदमस्य शिरस्ततः,
सदनुवर्तनदूरिधुतास्रपम् ॥
तदितरेतरपावनतामगा -
दुभयतो भयतोषणतामपि ॥ ५२ ॥

सुरुचितेन पुरोगतमंत्रिणा ,
लघुतरं नृपवर्त्मविलंघ्य सः ॥
सति रिपुघ्नकृतोदुपकारिके -
ऽत्युपवने पवनेन पुरोऽवसत् ॥ ५३ ॥

अधिगतेऽपि दशान्तरमाश्रया -
पगमतोंगजदशनतोऽधिके ॥
ददृशतुः सुमती इव मातरा -
वुपगतापगताङ्कुरके लते ॥ ५४ ॥

अथ तयोरुभयोरुमकावपि ,
पदयुतेऽपततां समपश्यताम् ॥
न च सुतावपितेऽश्रुदृशेमतौ ,
स्वतनयौ तनयौपयिकत्वात् ॥ ५५ ॥

वपुषि वीक्ष्य शितास्त्रनवव्रणान् ,
सदयमात्मजयोः सुमता तयोः ॥
न जननीह तु वीरजनुः स्त्रियो -
ऽप्युचितमंचितमंडलरक्षिणाम् ॥ ५६ ॥

अपि विदेहपतेस्तनया बधू -
श्चरणयोर्निपतान्युभयोः समम् ॥
अहमितीयमुदीर्य कुलक्षणा ,
निपतिता पतिताप[1]शंतावहा ॥ ५७ ॥

---

1—Mss. 1, 2 (निपतिता पतितापशमावहा) इति पाठः

पतिरसौ शुचिना तव सुव्रते -
ऽतरदलंघ्य विपत्तिपयोनिधिम् ॥
अवदतामिति तामुपतिष्ठते -
सुचरिते चरितेन सहानुजः ॥ ५८ ॥

प्रणतमूर्ध्नि पुरा जननीक्षण ,
स्रवदनु स्म जलैरभिषेचने ॥
रघुपतेरभवन्नुदितेऽस्य ताः ,
प्रकृतयोऽकृतयोऽपि तदुत्सुकाः ॥५९॥

जितामरमहारिपौ रघूद्वहे जननी सुमु-
द्यशो हि मकरानिशप्रभासिताखिलभूतले ॥
समागतवतिप्रिये सतांक्षणादुगुणिनां मति-
र्निगूढफलशालिनी तदा बभूव पृथ्वीह सा ॥६०॥

सकलहृदयह्लादिन्यस्मिन् स्वभावसुखप्रदे ,
समयसमुदीक्षाध्वाने संगते शुभशंशिनि ॥
यदखिलमिदं नो चित्रं संबभौ जगदाशु त -
द्विलसतिहिमंसर्वं शीतांशुना प्रसमीक्षिते ॥६१॥

जगदुरागताः पौरपंक्तयो ,
भवति कोशलाप्यद्य सुश्रियाम् ॥
इति सुभाजनंराघवे पुनः ,
सुखमुपागते ताः परस्परम् ॥ ६२ ॥

दीव्यत् पुष्पकयानसिन्धुत्रिपिनाख्यानाद्ययोध्यागमै-
र्दुर्गादत्तसुशर्मपानकवरोपुत्रस्य तीर्थे कुरोः ॥
सर्गः श्रीरणवीरसिंहविभुनाऽऽदिष्टस्य संवासिन -
श्चण्डीदासकवेः कृतावुपगतः सम्पूर्तिमेकादशः ॥६३॥

❀

श्रीमन्महाराजाधिराज- जम्बू-काश्मीराद्यनेकदेशाधीश
श्रीरणवीरसिंहवर्मादिष्ट- श्रीकुरुक्षेत्र-मध्यरेखाँतर्गत
पुण्डरीकपुरप्रसिद्ध - सवालवंशावतंस
श्रीदुर्गादत्तात्मजनव्यचण्डीदासकविकृतौ
"रघुनाथगुणोदये" महाकाव्ये
लंकाप्रस्थानपुष्पकविमानारोहणतदन्योऽन्यालापसमुद्रादिवर्णन -
भरतसंगमायोध्योप्रवेशादि वर्णनो नामैकादशः सर्गः ॥११॥

———

ॐ

श्री रघुनाथगुणोदय- महाकाव्ये

# द्वादशः सर्गः

श्रीः

अथ सुतीर्थ - समुद्र - समाहितै -
रमल- काञ्चन- कुम्भ- कृतान्वयैः ॥
शुचिभिरस्यजलैरधिमूर्द्धता ,
सुविदधुर्विदधुर्ह्यभिषेचनम् ॥ १ ॥

श्रितवृषिः प्रभया परयापि यो ,
विरुरुचेऽधिकमन्तरुदात्मनि ॥
अधिगतस्य नृपासनमस्य सा -
छविरसौ विरसौहिक वागियम् ॥ २ ॥

अथ युग्मम् :

अथ समान - निशाचर - वानरैः ,
सरसलक्ष्मण - सम्भृतचामरः ॥
भरत- हस्त- सितातप- वारणो -
प्यतिरवेऽतिरवेज्य - रथोत्थितः ॥ ३ ॥

बलयुतस्तततोरण - शोभिताम् ,
विमलसौधशिखोद्गत- लाजिकाम् ॥
निगमघोष- सुमङ्गल- निःस्वनै -
स्सपुरमापुरमाविशदुज्ज्वलाम् ॥ ४ ॥

गुरुजनेन मुदातिविभूषिताम् ,
विमल- राग- नवाम्बर- भूषणैः ॥
समुदुपेतरथां जनकात्मजाम् -
पुरवधू- रव- धूतपिकाऽनमत् ॥ ५ ॥

शुचिरसाविति तेन निदर्शिता ,
ज्वलनगेव जनाय पुनः स्वभात् ॥
वितरितं धृतवत्यनुसूयया ,
सुतनुरातनुरागमुरु - प्रभम् ॥ ६ ॥

समुपवेश्य विशेष- परिच्छदे -
ष्वधिकवेश्मसु सर्वसुहृज्जनान् ॥
स पितृसद्मविवेश सदम्बुदृक् ,
सनिजनानिजनाथसुलेख्यभृत् ॥ ७ ॥

स हरिराजपुलस्त्यभवादिकान् -
सममुदाचरदात्म- विचिन्तनैः ॥
लसदनिर्वचनीय- गुणप्रियैः ,
सुरमतैरमितैः सुपरिच्छदैः ॥ ८ ॥

उपगतान् स मुनीन् स्व दिदृक्षया ,
त्रिदिवतो विधिनाशु सभाजिताम् ॥
रमृदपृच्छदरैर्निहतस्य त -
ज्जनिजपौ निजमौरुषमादधत् ॥ ९ ॥

प्रतिगतेषु च तेष्वधिशर्मणोः-
ऽविदितपक्षगतोऽन्हरि राक्षसान् ॥
क्षितिसुता स्वकरोपचिताग्रसत्,
कृतिभृतोऽतिभृतो विससर्ज तान् ॥ १० ॥

सुररिपोरसुभिस्सह पुष्पकम्,
युधि यदार्यहलं स्वयमाहृतम् ॥
स धनदाय पुनः प्रणिनाय तत्-
परहिता रहिता हि सतां कृतिः ॥ ११ ॥

सममसौ पुरुषार्थ तृतीयके,
समभवत्स यथावरजेष्वपि ॥
तिसृषु मातृषु चापि समानधी-
रनपरा न पराधिजने तथा ॥ १२ ॥

समवता पितृमानपि तेन सो-
ऽविहित लोभवता धनवानपि ॥
सुकृतवानपि तेन विनिघ्नता,
भयमुदाय मुदा स तदा जनः ॥ १३ ॥

स समये व्यवहृत्य विधाय त-
द्वपुरलं धरिणीसुतयांकगः ॥
समुपभोगसमुत्सुकया श्रिये,
वसुमतो सुमतोऽरमतोद्भुवा ॥ १४ ॥

मणिगृहेषु यथेप्सितमैन्द्रियम्,
समनुभावमतोरभवत्तयोः ॥
यदनुभूतमना यतिदण्डके-
ष्वसुखमासुखमारममाणयोः ॥ १५ ॥

अथ विहारवनोपगतं तथा,
लसति यार्यरसेन रिरंसया ॥
ऋतुगणोऽपि तमित्यवनौ तथा,
समुदया मुदयात्रिज सुश्रिया ॥ १६ ॥

कुसुमकान्तमुदञ्चितमुल्लसत्,
न्नवदलैर्ललितं कलकूजितैः ॥
परभृतां मलयानिलमञ्जु तत्,
सुमधुरं मधुरं जितमैक्षत ॥ १७ ॥

विहरतोरुभयोर्मधुमालकृद्.
विहितपुष्पसमायतिमण्डला ॥
परमशोभत साधिकचम्पकैः,
सुमित मामितमाधवनी- वनी ॥ १८ ॥

प्रचलतोऽस्य तदानुवनं धनु-
र्मधुरयाचतरागमनेकधा ॥
ध्रुवमनेक रसप्रसवान्पुरो,
रसविदः सविदः सरसोऽस्य यत् ॥ १९ ॥

कुसुममस्य हि गन्धवहा समम,
सुरभिरेष तदा रुचि किंशुके ॥
इति धियेव पुरा निदधे श्रिया-
ऽऽशु सुरभेः सुरभेद इवाद्यथा ॥ २० ॥

स कुसुमैः रुरुचेऽधिकमस्फुट,
क्षितिरुहां व्यसनीव नखक्षतैः ॥
गणिकया ऽऽमदयाश्रुतयार्पितैः,
सुविभवैर्विभवैशिकमण्डले ॥ २१ ॥

करयुताविरहानलभर्जिताः ,
सुमनसोऽत्र गता मरुतैवताः ॥
मधुमहोषधिमेत्य मधुव्रत -
च्छलतया लतया निजया स्वनत् ॥२२॥

चलति चारुचलद्दलमाधवी ,
रुचिरपुष्परसासवमत्तया ॥
भ्रमरगीतिरगाप्यलिपोषया ,
समलयामलयाचलमारुते ॥ २३ ॥

जगतिगन्धवहेन समुद्यता ,
सुरभिणासुरभाविह गन्धभृत् ॥
मृग इवातिविकृष्य न को वशे ,
सुगमितो गमितोऽपि मनोभुवः ॥२५॥

हरति कस्य मनो न मनस्विनो ,
नवरसाललताभृतकोरका ॥
प्रमदयेव वशीकरचूर्णिका ,
सुकरया करयंतनिजेशया ॥ २५ ॥

कुरबके मधुपं पिकमाम्रके ,
सरवमुन्नयतोऽयमभून्मधोः ॥
प्रमुपवाक्यगुणोन्नतिभाक्स्वनो ,
ऽनुसमयं समयंत्रितकोऽस्त्वसौ ॥ २६ ॥

## अथ ग्रीष्मवर्णनम् :

कुमुदतोऽप्यतिकोमलमित्यलं ,
तदपरैरति संस्तुवते वपुः ॥
मृगदृशां शुचिरित्यधिकेर्ष्ययो ,
न्महशिरीहशिरीहमदर्शयत् ॥२७॥

इदमितीदमितिप्रतिवल्लरि ,
प्रणयिनीं कुसुमावचिचीषया ॥
उपरतो भ्रमतीमवलोक्यतां ,
सममभूत्समभूमिविहारतः ॥ २८ ॥

विकचदन्तरकोमलकुड्मला ,
सममुपेत्यसमाधिभृतोऽप्यलात् ॥
हृदिहवोऽपि रुतापि च पाटला ,
शुचिरसं चिरसंभृतमंगना ॥ २९ ॥

## चतुर्भिः कलापकम् :

अनुदितापि तदिंगितवित्तमा ,
शशिमुखी ससखी सह मातृभिः ॥
रथमिथोजलकेलिविधित्सया ,
मतरसा तरसा सरयूभयात् ॥ ३० ॥

विमलनीलमणिस्फटिकाश्मभि ,
विरचितोभयकूलरुचान्वितास् ॥
रविसुतामलपूरपरार्द्धित ॥
त्रिपथगा पथगादरुचिप्रियाम् ॥ ३१ ॥

विशदवारितया विशदीभवत् ,
तलविलोकनविभ्रमचेतसाम् ॥
समनिपात निरुद्धरयामि वा ,
ऽऽवसुदृशां सुदृशां जयनैस्तनैः ॥३२॥

विहरति प्रतिनर्मसखिं प्रति ,
प्रियमतीव तदंभसि यौवने ॥
स्तनसमर्पितचन्दनकेसर ,
च्यवनतो वनतोत्थितशारदाम् ॥ ३३ ॥

**इति कलापकम् :**

सुशिशिरोऽहमयं दिशमुद्भिमा -
मिति यथा विहतापमवाप्नुयात् ॥
रविरुताप ततोधिकमापदां ,
भुविकला विकलाप्युपकारिणः ॥ ३४ ॥

खरकरः कृपयेति शनैरिह ,
विहगयोरिदमस्तु परन्त्वतः ॥
अय[1]नमौत्तरयेति महामही -
भृदवितं दवितं परदुर्गमम् ॥३५॥

रघुपतेस्तुरगभ्रमिसन्ततौ ,
गतमशिक्षत यत्तदनुस्मृतिम् ॥
मरुदिहेत्यरिचंक्रमणाच्छलं ,
विरमधीरमधीतमिवेक्षते ॥ ३६ ॥

---

1—Mss 2 प्रथममौत्तर ... इति पाठः

**अथ वर्षावर्णनम्[1] तत्रयुग्मम् :**

तमुपलंभितसौधशिरो गृहं ,
सरसपीनपयोधरमंडिता ॥
परिलसच्चपलायतलोचना ,
जनकजाऽऽनकजातमहोत्सवा ॥ ३७ ॥

विदधती रुचिरेक्षणविभ्रमा -
धिकरुचिं चरितार्थमिव स्थितम् ॥
समुदमेकपदं परया श्रिया -
श्रुसमगात्समगानसमुत्सकम् ॥ ३८ ॥

सरति वारिधरस्पृशि सन्मरु ,
त्यभिससार चिरं रुषिताप्रियम् ॥
पतति सम्प्रति सन्निहितं प्रिया ,
नभसि कांभसि कान्तमु[1]हुत्यजेत् ॥ ३९ ॥

चलकुसुंभरसच्छुरिताम्बरा ,
प्रतिचलन्त्यवलोक्यधनं प्रियम् ॥
वियति राममितां धरिणीसुता-
मनुचकानुचकार न चंचलाम् ॥४०॥

स धनुषा सधनुर्द्विगुणोऽमुना ,
[2]यदिहमाल्यवतोऽधितटं बभौ ॥
स किल तेन घनःपरिवर्षणं ,
वितनुते तनुते नु तदा दिशम् ॥ ४१ ॥

---

1—Mss. 1, 2 (कान्तमुपव्रजेत)

2—Mss. 1, 2 (यदिह)

सुरभिचूर्णविधिर्द्विगुणी भवत् -
सहजसौरभशोभिमुखाम्बुजम् ॥
श्रयितुमंजुदृशामपहायते ,
न मदलीमदलीढकराम्बुजे ॥ ४२ ॥

नृपधवा नृपजा नृपतेर्वधू ,
रविकुलं त्वियमित्य[1] यदप्यभि ॥
क्षितिसुतास्यमिहात्र किमासितं ,
नृपतयापतयाल्वपि नापतत् ॥ ४३ ॥

इह कदम्बकदम्बकमुच्चकैः ,
शिखिकुलं सवधूदितमुच्चकैः ॥
चपलचातककाननमुच्चकै ,
रसमभात्समभावसमुच्चकैः ॥४४॥

धनतमोऽचिरकान्तिगुणप्रभा ,
गतरवीन्दुविवेकरसाश्रयाः ॥
इह सपंकशमापथि वासराः ,
खलसतां लसतां कृतिहृत्समाः ॥४५॥

**अथ शरद्वर्णनं :**

अनुभवन्तमुदायतिवार्षिकं ,
सुखमवाप शरच्छरलक्षणा ॥
इति निबोधयती महतामपि ,
स्व समयोऽसमयोगितया च ते ॥ ४६ ॥

---

1—Mss. 1, 2 (मित्यपतत्यभि)

2—Mss. 1, 2 (समयोचित)

न कृतिरप्यतिवैरमिह प्रियं,
भवति कारणमभ्युदयेव यम् ॥
उदयतो मधुरोऽपि मनस्विना,
मकलहं कलहंसरवोऽभवत् ॥ ४७ ॥

यदकरोत्कलहंसकुलं कलं,
मुहुरलं क्षितिजामभिशैशवे ॥
वयसि नूनमशिक्षत सिंजिता -
दनुगतं नु गतं तददर्शयत् ॥ ४८ ॥

प्रियतमाप्रियभूशरणमुत्सवाः,
सुमनसो न रसप्रचुराक्वचित् ॥
शरदि शालिगणोऽतिरवस्तथा,
रसमयः समयः सुविदां मतः ॥५९॥

भुवि पयो भुवि दीर्व्यति यामिनी-
शयपयोदभवं सुकरः स्वयम् ॥
परमिहैव महःकृतमानसो,
रविरलं विरलं कृतवांस्तमः ॥ ५० ॥

उपगते हृविमुच्य पयोधनै[2] -
रजकधौतसिताम्बरसाम्यता ॥
स्वस्मितताऽत्र सतापि विनाप्यते,
घनवता नवतातिविसर्जनम् ॥५१॥

अधिगतोऽप्यतिशस्य जिघित्सया,
पशुरिषेऽप्यघसन्न मृगव्रजः ॥
कलमपालिसुगीतिमुपस्थित-
श्चतुरया तुरया गदितं न कः ॥५२॥

1—Mss. 1, 2 (स्वयम्)
2—Mss. 1, 2 (पयोधने)

विषमपत्रसुगन्धिमरुत्पुर -
स्सरसुवृत्तगतेश्चकिता इव ॥
मदकलोल्लसिताद्विदधुः प्रिया ,
परममूरममूर्ज मतंगजात् ॥ ५३ ॥

सितपयोदपटा जरतीः क्वचिद् ,
गतधनावरणाः क्वचिदैक्षत ॥
शशिमुखीः सुरतापगताम्बरा -
सयुवतीर्युवतीव्ररसा दिशः ॥५४॥

सकचिताम्बुजदृक् सरसीर्दिशः ,
सितगरुन्महसाः शरदन्तुरा ॥
समवलोक्य शरन्महिषी सखीः ,
क्षितिभुवेति भुवे समदर्शयत् ॥ ५५ ॥

अचिरशाणसमुद्धतसङ्करु -
न्मणिकृते च दिवः सुललन्तिका ॥
इयमपश्यदितीहममेव सा -
ऽनिमिषतो मिषतोऽस्ति शुकावलेः ॥५६॥

**अथ हेमन्तवर्णनं अथा :**

इति परस्परजातरिरंसयो ,
मुदितयोरपि शारदसंभृतिम् ॥
समनुभूय हिमोऽप्यधिशर्मणोः ,
समुदयान्मुदयान्तरवेश्मने ॥ ५७ ॥

हिमवतीभयुगद्वयसीमपि ,
सरितमेषमरुत्परिहैमनः ।
इति भियेव जनो मिथुनीभव -
न्निव शते विशतेऽन्तरसद्मनि ॥५८॥

सवियुतात्सुतनोर्न किमन्यदा -
स्मरयति प्रतिहन्तुमिवोद्यतः ।।
इह तु यौवनसोष्मघनस्तन ,
स्मरणते रणते जनयाधिकः ॥५९॥

अनुनयं तमपि प्रियमानतं ,
चरणयोर्न मनागमतापितम् ॥
तमिह सैव तथा सहसेरिता ,
स्वयमितायमितापि हि तत्पदम् ॥६०॥

बत शुचावपिपासुनिमेषणो -
न्मिषितयोपि यया गमिताः समाः ।।
क्षणमिवागमयत्सधवात्र सा ,
वरजनोरजनीरपि हैमनीः ॥६१॥

अमतयामरुतः छदतर्जन- ,
मकृपतांगुलिदर्शनवंचना ।।
अधिगतेष्ट भुजान्तरदुर्गया ,
विमतयाऽमतया प्रतितर्जना ॥६२॥

अथ शिशरवर्णनं यथा :

वियुवतीमपि कान्तामितां बहिः ,
पुनरुपेतपदामलिनीरवै ॥
अरममंस्त वधूमिव झङ्[1]कृतां ,
स शिशिरे शिशिरेण नभस्वता ॥६३॥

तुहिनयोगवियोगविपाण्डुरै-
रिह तुषारगमान्तरितप्रियैः ॥
परमितातिपरस्परतुल्यता ,
सरसिजैरसिजैत्रदृशां मुखैः ॥ ६४ ॥

कुसुमकेसरचूर्णलसल्लता-
वलिरिवालिरुदंचितमन्मथा ॥
धवसिवाचरितुं सुदृशामिह ,
सुफलिनो फलिनोततिरुत्थिता ॥ ६५ ॥

इदमयुक्तमिहा[2]हिमहारवि -
र्भवतिकालवशादबलो बलो ॥
तपसि को मसमेति शमं प्रिये ,
शममतामवतार रुचिर्जनः ॥ ६६ ॥

---

1—Mss. 1, 2 ( झीत्कृताम् )

2—Mss. 1, 2 (मिहर्षि)

**अथ युग्मम् यथा :**

इह वि[1]धाननिषेधविधावमूः ,
किमुलवंगलता मधुपा इमे ॥
मलिनता रजसेति जहास या -
सुमनसोऽमनसो दलतालिनः ॥ ६७ ॥

अविदितात्मकथा[2]भवनाधिकं ,
सपदि कुन्दलतापि तथाभवत् ॥
हसनमल्पदृशोऽवसरोऽपि यत् ,
प्रतिजनेऽस्ति जनेऽस्ति तदात्मने ॥ ६८ ॥

दिनकरोऽवनतोन्तरधाद्विधो -
रिति पुरैव मदोदयतः कृती ॥
भवति चण्डकरेऽल्पकरार्यमं ,
सुलघुतालघुतालमपिद्वयम् ॥ ६९ ॥

प्रियपराक्तमुग्धवधू [3]शिता -
न्तरपटादिव चन्द्रमुखीमुखम् ॥
उदयदिन्दुरगादतिमानिनी ,
जनमनोनमनोचितमान्त्रिका[4] ॥७०॥

---

1 —Mss. 1, 2 ( विदान )

2—Mss. 1, 2 ( तथा )

3—Mss. 1, 2 ( सिता...)

4—Mss. 1, 2 ( मान्त्रिकः )

अ[1]धिशयं सफलायतिशाम्बरम् ,
सुखमनेकविधं सुविधं द्वयोः ॥
उदयदम्बुजचाटुचटस्वनो -
ऽनुभवतोभवतोषणमारुतः ॥ ७१ ॥

अथ यथारुचि संकलितार्तवो -
त्सवपरम्परया धरणीभुवः ॥
अरमचीकमतानुमतोऽनघः ,
समृगयां मृगया तनयोज्वलाम् ॥७२॥

**अथ मृगया :**

श्व[2]कुलिवागुरिचारुपुरस्सरा ,
दवपरोनवनाध्व विचारणा ॥
शितवरास्त्रसहाय विभावना ,
नवरयावरया न विलक्षणा ॥७३॥

चलशरव्यनिपातविनिश्चया ,
चकितसस्मयितेङ्गितवोधिका ॥
परभयालससत्परिपंथिनी ,
श्रमतया मतयातमृगाहिता ॥७४॥

---

1—Mss. 1, 2 (अतिशयं)

2—Mss. 1, 2 ( शकुनि )

विमतपान्थनिरोधवतीलसत् -
तुरगबन्धनिपानपरावनिः ॥
गतभयावनिसंचरणाधिका -
मृगवयो गवयोदयभासुरा ॥ ७५ ॥

उचितवेषभृतां[1]ह्यबलानति ,
[2]कुशलिनांश[3]रवीतमहाभियाम् ॥
अलिरवोपधितद्वनदेवता ,
रुचिरगोर्गचगीतिनिषेविणाम् ॥ ७६ ॥

विपिनमेतदुदीर्यं समाविशद् ,
गवयसिंहवयो मृगमंडितम् ॥
प्रयमनीतिरसौ मृगया मुदे -
विजयतां जयतांडवशालिनाम् ॥ ७७ ॥

जनकजाः कवरीक्षणतुल्यता ,
मुपवहन्शिखिनं न मृगं तयोः ॥
समसहन्नलमेणभुजां गणं ,
सुमृगरामृगराजरवेर्ष्यया ॥ ७८ ॥

अथ सुखोपगतं वदनेन सा -
न्वयविवर्द्धिरुचा शरपाण्डुना ॥
अनुदिताक्षरदोहदशंसिना ,
तमुददान्मुददामसृणेक्षणा ॥ ७९ ॥

---

1—Mss. 1, 2 ( हयबलानति )

2—Mss. 1, 2 ( कुशला )

1—Mss. 1, 2 ( अरघात )

श्रीरामावनिनाथता-रस-ऋतुश्रीवर्णनासूल्लसन्
दुर्गादत्तसुशर्मपानकवरोपुत्रस्य तीर्थे कुरोः ॥
सर्गः श्रीरणवीरसिंहविभुनाऽऽदिष्टस्य संवासिन -
श्चण्डीदासकवेः कृतावुपगतः पूर्तिसुखं द्वादशः ॥६३॥



श्रीमन्महाराजाधिराज- जम्बू-काश्मीराद्यनेकदेशाधीश
श्रीरणवीरसिंहवर्मादिष्ट- श्रीकुरुक्षेत्र-मध्यरेखाँतर्गत
पुण्डरीकपुरप्रसिद्ध - सवालवंशावतंस
श्रीदुर्गादत्तात्मजनव्यचण्डीदासकविकृतौ
"रघुनाथगुणोदये" महाकाव्ये
श्रीरामाभिषेकपुरप्रवेशादिषड्तुमृगयाविहारजानकीगर्भधारणादि
वर्णनो नामद्वादशः सर्गः ॥१२॥

———

ॐ

श्री रघुनाथगुणोदय- महाकाव्ये

# त्रयोदशः सर्गः

श्री:

यस्मात्सर्वमिदं भाति युक्तमात्मभृतो मया ॥
तं बाचार्थमिवालम्बे श्रीशं शब्दार्थसिद्धये ॥ १ ॥

पाषाणो यत्पदस्पर्शादर्थार्हा सुतनुः सती ॥
बभूव भविता मृद्वीरपि तं राममाश्रये ॥ २ ॥

काव्यं चिकीर्षुः किमपि (श्री)रघुनाथगुणोदयम् ॥
वन्दे दन्तिमुखखं देव्याः पुत्रं प्रत्यूहशान्तये ॥ ३ ॥

यदन्वयात्सचैतन्यं जडं यद् व्यतिरेकतः ॥
प्रतीयते लगत् सा मां वागीशाऽवतु सर्वदा ॥ ४ ॥

ययोः सतपसोद्भूतं वपुरेतत्सदन्वये ॥
साधनं सर्वसिद्धीनां वन्दे तौ पितरौ पुरा ॥ ५ ॥

---

अद्यापि कारयत्येव वध्वा देव्या व्रतं हठात् ॥
उपात्तं मेऽक्षरारम्भे नौमि तां मातरं पुनः ॥ ६ ॥

मयि येऽति कृपां चक्रुः सतीर्थेषु कनीयसि ॥
तान् श्रीशिवसहायाख्यान्गुरूनानुपदं भजे ॥ ७ ॥

सति श्रीरघुवंशीये वंशेऽस्मिन् रूपचन्द्रमाः ॥
श्रीमद्गुलाबसिंहोऽभूत्क्षीराब्धाविव चन्द्रमाः ॥ ८ ॥

शशास श्रीसमृद्धान्यो जम्बू- काश्मीरपूर्वकान् ॥
विषयान्व्यसनातीतो मतिमान्नयकोविदः ॥ ९ ॥

श्रीमाँस्तस्यौरसः पुत्रो रणवीरहरिः स्वराट् ॥
अध्यास्ते योऽधुना राज्यमवन्नुच्चैर्नृपासनम् ॥ १० ॥

गुणज्ञो गुरुभक्तश्च गुरुचेत्ता गुणिप्रियः ॥
गुणैर्गम्भीर्यधैर्याद्यैः सहजैः समलंकृतः ॥ ११ ॥

तदाऽऽसाद्याऽऽत्मजामात्यमित्रभृत्यास्तथा प्रजा ॥
वन्धूनारञ्जयन्भाति शरद्राका शशीव यः ॥ १२ ॥

युष्मत्तः श्रीमहाराज पदवीं राजपूजिताम् ॥
वर्धतेऽनुदिनं सम्पच्छुक्लपक्षे विधोरिव ॥ १३ ॥

श्रिया सम्वर्धयञ्जम्म्रराजधानीं यथासुखम् ॥
देशान्काश्मीरगिलगिल्लदाकादीन् प्रशास्ति यः ॥ १४ ॥

श्रिया धिया च यशसा शौर्यौदार्यदयादिभिः ॥
वलैर्योप्यधिकः पाति पूर्वतोप्यधिकां धराम् ॥ १५ ॥

यत्राकार्यतया सार्द्धं यस्मिन् सर्वज्ञतोत्सुके ॥
तस्करत्वमिवाज्ञत्वमपि स्वप्रकृतौ स्थितम् ॥ १६ ॥

विद्योत्साह सदाचारशीलशौर्य्यार्जवान्यपि ॥
समन्तात् साधुकर्माणि वृद्धिं यातानि यद्भुवि ॥ १७ ॥

येनात्मजेषु सद्बुद्धिर्ज्येष्ठः सद्गुणशालिषु ॥
श्रीमत्प्रतापसिंहाख्यो यौवराज्येऽभिषेचितः ॥ १८ ॥

गुणैः शौर्यादिभिः सर्वैरनूनोऽप्यात्मनः स्वयम् ॥
कुर्वन्नप्युचितं कार्यं स येनेत्युपदिश्यते ॥ १६ ॥

पाणिनीय नयोभिज्ञो विज्ञोऽप्यन्यनृपागमे ॥
अतः सुनीतिसाहित्यशास्त्रं सम्प्रति साध्यताम् ॥ २० ॥

यस्याजिरे यथाकालं यावद्विद्योपयोगिनाम् ॥
उपयोगो न कस्यास्ति दवीयस्सद्मनोऽपि च ॥ २१ ॥

सर्वान्तर्यामिभिर्देवैर्मूर्ति निर्माणच्छलात् ॥
हृदये योऽर्थ्यते स्थित्यै विद्वांसस्त्वाश्रयार्थिनः ॥ २२ ॥

पूर्वं दशरथोऽपान्नोनृपस्तद्वंशजोऽप्यसौ ॥
इति ते यद्गिरिं प्राप्ता एकएवाश्रयः सताम् ॥ २३ ॥

सुरा रात्रिञ्चरान्नूनं भीताःकलिमलम्लुचात् ॥
किमत्रैताः पुराप्यद्रीन्शिश्रियुस्ते दशाननात् ॥ २४ ॥

अपि व्यवहितं द्वाभ्यां कृतं मन्ये नु वर्तते ॥
योऽप्यत्र सूत्रकृद्वत् कुलधर्मानुशासनात् ॥ २५ ॥

प्रवृत्तिश्चानुवृत्तिर्द्वे स्यातां यस्यानुशासने ॥
मण्डूकप्लुतगत्यापि विषये पाणिणेरिव ॥ २६ ॥

अथातो धर्मजिज्ञासानंतरोक्तार्थशासनात् ॥
कलिस्थाने कृतादेशो ध्रुवमत्रापि वादिवत् ॥ २७ ॥

सान्तरेऽपि विधेयार्थमुक्तसूत्रान्तरक्रमैः ॥
स तु यद्विषये नित्यं व्यवधानेऽपि णत्ववत् ॥ २८ ॥

विद्यया विनयेनापि विद्वत्संग्रहेण च ॥
नव्यशास्त्रे ह्यतीत्यविख्यातो योऽधुनावनौ ॥ २९ ॥

विद्वद्भिः सर्वदेशीयैः सर्वशास्त्रविशारदैः ॥
कृता काशीपुरी येन श्रीजम्बूनगरोपमा ॥ ३० ॥

एकदाऽचिन्तयँश्चित्तेऽवस्थितो रहसीति यः ॥
सर्ववृद्धेर्निदानं तु विद्वत्तैव न चापरम् ॥ ३१ ॥

यथा येन स्वचक्रेऽपिविद्वांसः स्युस्तथा मया ॥
तदेव त्वरितं प्रातर्यथाकामं विधीयताम् ॥ ३२ ॥

इह लोके परस्मिन्वा पुंसामात्महितैषिणाम् ॥
सदसद्वस्तुविज्ञाने शास्त्रमेव विलोचनम् ॥ ३३ ॥

तेन हीनो नरस्त्वन्धः कार्याकार्यविनिर्णये ॥
अन्तरेणाक्षिविज्ञोऽपि नो पुरस्थमपीक्षते ॥ ३४ ॥

---

1—Mss. 1, 2 (समागत)

शास्त्रं चक्षुः पुमान्प्राज्ञो भूतं भव्यं च पश्यति ।।
मान्योऽपि भूभृतां तेन विनात्वास्तरणाश्मवत् ।। ३५ ।।

शास्त्रेण वर्धते बुद्धिर्विद्या शास्त्रेण वर्धते ।।
तस्मात्सर्वप्रयत्नेन कर्तव्यः शास्त्रसंग्रहः ।। ३६ ।।

संग्रहीतेऽपि चेत्तस्मिन्नभवेत्तस्य तत्ववित् ।।
तन्मुधैवान्तरालक्ष्यभेदिनं लक्ष्यभित्तिवत् ।। ३७ ।।

स्वीयश्चातोऽन्यदेशीयाः शास्त्रिणो धर्मशास्त्रिणः ।।
दैवज्ञाः कवयो ज्योतिर्विदो मन्त्रार्थवेदिनः ।। ३८ ।।

स्वरज्ञाः शकुनज्ञाश्च वैद्याः पौराणिकाश्च ये ।।
शस्त्रज्ञाः शस्त्रघटका ये च शस्त्रपरीक्षकाः ।। ४९ ।।

शस्त्रास्त्रचालनज्ञा ये ये च युद्धविशारदाः ।।
जलयन्त्रप्रवीणा ये घटियन्त्रादि साधकाः ।। ४० ।।

गजाश्व विद्यानिपुणा गो खरोष्ट्रविदश्च ये ।।
लोहादि सर्वधातुज्ञा रत्नजाति विभावितः ।। ४१ ।।

भूमिभेदकराश्मज्ञाः ये केचित्क्षेत्रमापकाः ।।
शिल्पशास्त्रेऽतिकुशला ये वा, रामकलाविदः ।। ४२ ।।

बीजवपनतत्वज्ञा येऽन्ये तत्कालवेदिनः ।।
तत्तद्दिनमयाभिज्ञा येऽन्यविद्याविशारदाः ।। ४३ ।।

यतस्ततः समानेया इत्यालोच्यार्चनालये ।।
रघुनाथपदं प्रातःसंस्मरन् समुपागतः ।। ४४ ।।

तत्रागत्य समभ्यर्चन्देवान्सर्वहिते रतः ॥
यश्चागतान्स्वविदुषः सम्बोध्येदमब्रवीत् ॥ ४५ ॥

यथा बुद्धि यथा शास्त्रं भवद्भिरप्युपागतैः ॥
विद्या सम्पादने यत्नः क्रियतां कार्यतामपि ॥ ४६ ॥

एवमेव समाहूय लोकान्सम्बोधयत्सुतान् ॥
पाठयन्याति योत्यर्थंमौरसानात्मजामिव ॥ ४७ ॥

विद्यया वर्धते बुद्धि बुद्ध्या विद्या प्रसर्पति ॥
भवेद्धर्मार्थ संसिद्धिस्तयो सम्वर्धमानयोः ॥ ४८ ॥

धर्मात्सकर्मभावः स्यादर्थः [1]सत्कर्मणो भवेत् ॥
अर्थाद्राज्यं सुखं राज्याद्राज्यबृद्धिस्तु विद्यया ॥ ४९ ॥

विद्या यद्यप्यनेकाः स्युरुभे भूमिभृतां हिते ॥
भवतो नीतिविद्यैका परा तद्वृद्धिकारिका ॥ ५० ॥

विना व्याकरणं नीति बिद्याहृद्या न जायते ॥
कर्तृ कर्म क्रिया ज्ञानं यतः स्यान्नीतिबर्धनम् ॥ ५१ ॥

अस्तु तत्तेन किं तस्य निर्मातुः खनेरिव ॥
प्रवृत्तिरुभयोः क्वापि दृष्टा साहित्यमन्तरा[2] ॥ ५२ ॥

अनन्वितक्रियायुक्तिर्भीतिर्व्याकरणेऽपि नो ॥
विना सत्संगृहोतारं कन्यके वा पितुर्गृहे ॥ ५३॥

---

1—Mss. 1, 2 (सत्कर्म) 2—Mss. 1, 2 (सन्तरा ?)

अर्थानां नयनीभावो नीतिर्वाऽऽधारसाधने ॥
किमनेन भवेदस्या कुलालः कुरुते घटम् ॥ ५४ ॥

कर्मादिप्रत्ययाद्भूतभवद्भव्य पदार्थधीः ॥
सत्यता नीतिनैपुण्यं काव्येनैव सकारणम् ॥ ५५ ॥

सुवृत्तं सरलं सम्यग्गुणालङ्काररीतिमत् ॥
निर्दोषं सरसं यत्स्यात्तत्काव्यं बालबोधकृत् ॥ ५६ ॥

इत्यालोच्य विदा येन समक्षं विदुषामहम् ॥
तथा तत्कर्तुमाज्ञप्तो यथा बालोऽपि विद्भवेत् ॥ ५७ ॥

तदाज्ञामधिमन्वानो मनोवाक्कायकर्मभिः ॥
करोमि किमपि स्पष्टच्छन्दोमन्दोऽपि तत्तथा ॥ ५८ ॥

यद्यप्यस्तीह तद्वृद्धत्रयी चापि लघुत्रयी ॥
तयोः सापेक्षकत्वान्मे मध्यत्रय्यन्तरेऽस्त्वितदम् ॥ ५९ ॥

तत्पदार्थविनोक्तिर्मे कथं नापेक्षिता तयोः ॥
मध्यसखीव सरसा सती सापेक्षयोर्द्वयोः ॥ ६० ॥

भविष्यत्येव समये तयोरप्येतदन्तरे ॥
उदितत्वाद्यथाऽऽलोकः प्राच्यार्वाच्यप्रभावतः ॥ ६१ ॥

इदं हृदयास्त्वङ्गी करिष्यन्ते तथैव यत् ॥
परेऽपि मन्वतेऽत्राणुमहतोर्मध्यमां मितिम् ॥ ६२ ॥

सन्ति यद्यपि काव्यानि तथापि स्वविनिर्मितौ ॥
हेतु राज्ञा प्रभोर्वा मे रघुनाथगुणस्मृति ॥ ६३ ॥

गिरां देवीं समभ्यर्च्य शुद्धये स्वगिरामहम् ।।
कुर्वे काव्यमुदारार्थं (श्री)रघुनाथगुणोदयम् ॥ ६४ ॥

गुणाः श्रीरघुनाथस्य क्व क्षीराब्धिपयः समाः ॥
क्वाहं चाल्पगतिस्तत्र यत्र हंसा ससंशयाः ।। ६५ ॥

ईक्षिताब्धेः स तस्यापि दुस्तरोऽहं तु वीक्षकः ।।
केवलायाः सरस्वत्या पल्वलस्येव टिट्टिभः ।।६७।।

सोऽस्तु सन्देहवांस्तस्य दुर्लंघ्योऽसौ भविष्यति ।।
तितीर्षोः स सहायो मे टिट्टिभस्येव पक्षिराट् ।।६८।।

———

## अथ बालानां गद्यचूर्णिकोत्कलिकादिज्ञानार्थगद्यानि

अथ सकलजनमनोनमनोचितमनोरमाऽनुभावभावभावित भावविभाबानुभावहावहारींत शुक शारिक शारणशाण तित्तिरि मयूर मार्तण्डमारीचक्रौंच कारण्डव कलाप कोकिल कपोत चक्रवाक सारस चकोरचातकचटककलविंकोत्तमकपोतपोतकपोतकीप्रभृतिप्रिय विहंगम मालिकाकुरंगकेलि रंगमारिंगमाणवातप्रमीसुप्रमेयपक्षिशावराजि प्रिय प्रियकशिल्पकाशशर्कसिंहशार्दूल सैरिभ शैरभ शल्लकभल्लूकव्याघ्र गो गवयगोमायुगोध गण्डककरीन्द्र मण्डलो प्लवंग नील नील लांगूल मुख महिष गोमृग विशेष वाराह बृन्द बृक वनविडाल कुक्कुट कुलचमूरुचिर चारु संघात संसेवितानु हरिद्वारि पदाऽभितोविराजमानानि - मानानि मानानुलव वर्द्धमान मलिनी कृत कर्पूर पराग पुंज कान्ति कमनीय नीर पूरसर्ग पुष्पिताऽनेकविधलतांचितोरूपदोभयकूलानुरूप परितः समुच्छलत् प्रोत्तुंग तरङ्ग भंगी बिशेषितातितरलता पीत रंगिणी धृहद्वीचिबलि समन्ता न्निवद्ध बिविध कुसुम कांचीचंचच्छटाति निम्न-नाभि ह्लद कुहर निविदति कृष्ण रुचिरोमालि व्यालिकोपलक्षित विकाशमान मव्याऽध्यात्मिकाऽनुभूत भूतिभावुक भासमान मानौन्नत्य-कठिन्योरू- पीवरान्यदुरारोह - रोमहर्षणारान्निरीक्ष्यमाणान्योऽन्य संमिलित गिरि युग्मस्तनमंडलाऽनिश विकाशमान नाना सुमनोऽति सम्पत्ति समुत्थित सौरभाऽऽकर्षित मनोवृत्तिः। वारांगनाऽनुसृति संपादयन्नतिचतुरचंचरीक चेटकानोत नायक निबोधन निस्वनायि तझंकारचमत्कारचारुतराम्भोरुहानना स्वाभाविक भव्यायित चंचला

चांचल्यचसत्कृति पलाय मान मृगीक्षणाऽऽष्टानर्घरसास्वाद रसिकात्म मधुव्रतातिविचित्र सरस चित्र पत्रक विशोभितोरु रीतिरंजित सुबृत बृन्तालवाल तिलक विशेष संवर्द्धिता भिन्नोन्नतायत भूतल भाल पट्टिका तिविशाल साल सरल हिंताल ताल शामलि तमाल नक्तमालता पिच्छ तिंतडीक जाल तिन्दुक करम्ब जम्बू रसाल शिरीष सर्ज कांचनारचिंचिणीचारखर्जुर करीर कुम्भार पीलु पिचुमन्द पद्माक पिप्पल पलाश पूगप्रियंगु पाटीर देवदारु शमीर शमी शाखोट वट बिल्वाऽऽमलवरुण जीवपुत्र जलवेतस वेतसांकोल कपित्थ पनसिन्दुवार प्लक्षक्षीरिणी मधूक मालाश्लेष्मातक कपिकच्छु करमर्द केतककरवीर कर्णिकार कोविदार नमे न्यग्रोधिका विभीतकादि सत्पुष्प गुच्छाव लक्षरूचिबृक्षावली केश पाश विन्यासरुचिर सीमाटवी सीमन्तिनी पुरा विभाव्य मान सुदूर विषया ॥१॥

सरसाधि रसाल माला प्रियाल पालित नैपाल पारूष पंक्ति पिस्ताऽऽरुकाञ्जीर मधुजम्बीर जंबीर बीजपूर पूरिताजिरान्तर्मालूर लकुचनिकोचनिःसंकोचनारिकेल नारंगिका निम्बूक नारंग वातामपूग-चदरीकर्मार दाडिम दुरूहाऽऽस्वादतूद मृद्विकाधिकोचु सेवन्तिका समूह ससूहनीय फल निकर स्ववशीकृत वशीकृत शकुंतसुकृति कृतिकुशल कुशश मधुकर मधुकर कुसुम कुलमरंद वैभव विशाल चम्पक सन्नक्त मालनीपनूतनमेरूमन्दार कुटज जाती पल कुंकुम नागकेसर कुरवकमन तुलसी महीसह गुल्म मल्लिका मालती मनोज्ञा माधवी जवा जाती यूथी कलालवंगीजात पत्रिका सूचिमल्लि गंगा पत्रिका त्रिसंध्य तगरा-दिषु पुष्पपरिमलोद्गार रमणीय तरोपवनाऽनुकूल परिचारक परीतो-पांत्य प्रदेशा ॥२॥

आगच्छदच्छानवच्छिन्नस्वभाव शिशिरतर समीर समुच्छल-न्नीर निकर निर्धौत तीर विराजमान कृति करालम्ब हाटक कलश घटकलश सम्पर्कात्म वेग रोध कुद्वापित सध्वनि द्विगुणोच्छ्वास प्रवाह तापीतटिनीसहचरी अति समय सम्वीता वरण वसना ॥३॥

प्रतिहरि हारितम दूर्वादल नलनाम मंजु मुस्तोशीर कासकतृण कसेरू सरस सुरभि शोणशित पीतसितादिनाना विध पुष्पस्तवकास्त-रणसुहि सम्वर्द्धमान संवर्द्धमानोपधान गृल्मगेंदुक सद्वंश भाव भव्य कुंजोपकुंजान् तरावनी शिशिर युद्धशिला शयनीय सम्वेद्यमान सुखा॥४॥

अनवरत तापी सरित् समुच्छल च्छीकर समूहोच्छ्रित वितता राम सुविसित सुमनोनेकलता गुल्मतरु सम्यक् सम्पर्क शीतल सुगन्धि-गन्धवह वन्दनीय व्यजनानु समय संवीज्यमानदूरी कृत दूराध्वगम संजाताया साध्वगावली संसेवितोपान्तोरुसच्छायच्छायावनी रुह राजिका ॥५॥

अगाधनीरावाध नितान्त निरान्तक निष्क्रमन्नक्र चक्र काडीर कूर्मादियादोगण चार चन्क्रम माण चंचच्चंचरीक कमल माला मनो-हारि पूर परि वारित परिरवात परिरवा परीत परिवीत वैरी प्रभूत विक्रमा क्रमण भीति मिचि भव्याय ताभितोभितोष कारि कान्तिविल-सन्नितान्त परिभावितान्तरोह यंत्रार्गल गवाक्ष वीक्षणी यवंगशः पट्टिश परिपरशु शस्त्र पंक्ति भासत्कुंत तोमर मुद्गर त्रिशूल शूल शक्ति परश्वध शतघ्नी परिशार्ङ्ग वैणवादि बहुकोदण्ड भूशुण्डि खड्ग चन्द्रहास चक्रच्छुरिका क्षेपणीया श्मयन्त्र स चन्द्र चर्मचारू रूप्य लोहा चर्मांगुलीय त्राण शिरस्त्रण शाण राशि संकाश मान वल्कल वारि-त्रोर्वीरुह त्वग्र ज्जुमज्जोज्वलगन्धक सुवचलेंगाल जाल चूर्ण पूर्ण चणक यव वार्जर गोधूमान्न तंडुलान्यधान्य माप मुदगभ्र कोष्टक मसूर नीवार भार तिल सर्षप कौसौं भाज्य तैल विशल्य करि व्याद्यौषधतदाद्याऽऽकृष्ट रसासवादि द्रोणो देदीप्यमानीष्ट शाष्टा पद्द विशिष्टाष्ट पटल परिष्कृत पद परिचीय मान महान्ततशकारा ॥६॥

मद्र मरुधन्व मगध मंथिल मत्स्य मालबानर्त त्रिगर्तांध्र कांग वंग विदर्भान्तर्वेद दशार्ण ब्राह्म वाह्लीकत्रनायु गुर्जर गौड़ द्रबिड शूरसेन शाल्व सौराष्ट्र रोमक कुरुदोन कुरुजांगल पांचाल पर्वत पांड्य

पारसीक प्रान्त प्रदेश खुत्त खत्त कट्ठु काश्मीर कच्छ भुजवलक्ष विकट गान्धार चोल चीन महाचोन नेपाल काम्बोज कीकट काम रूप कुन्तल कोंकण केरल काद्दूष केकय कान्यकुब्ज हैहयादि नाना देश विशेषागत जन जिगिमिषु विबिध वेश विन्यास रुचिरदोचीराज मान महाजन प्रवेश निर्गमावसर प्रष्टव्य नाम जातिः पातव्यभिधान प्रश्न कुशल-कवचि धानुष्क खड्गि धुरंधरानेक कक्षा रक्षाधिकृत महाभटं भाव-नीय गोपुर मुखा ॥७॥

प्रतिद्वारिजलजात सिक्ता जिह्यमहत्पापत्य पंकत्यक्त सीम सन्तान विलसित वितान विद्यमान तोरण समान संभव संभाव्य मान कुंभादिमान वेदी विधान देदीप्यमान समनोभर संहृति शब्दायमान नूपुरनव वधूटी प्रयाण प्रेंखद्युत्रराजि रंजितान्तर रथ्यासक्त रसिक जन मनो महोत्साह संपादिका ॥८॥

प्रति सौध सुधास्वाद स्वादी पो वाग्वैभव विचित्र पाटव पदीक्ष्यमाण गति विशेष सन्मंगल गान गरीयो वि विभूषण वसन विराजमानु सानंदगमन चांचल्य मन्दी कृत चंचला सांग सौरभ सं पज्जित पज्जित पद्मिनी पद्मिनी विचित्र चित्र चित्रिणी सशंख शंखिनी विशद हस्त हस्तिनी चतुर्विधमापिका नेत्र नीराजि तन कामा ॥९॥

नानाव्यवहार संभार संकीर्णा जीर्णो दीर्णतर राग रंजिता नर्ध्यंरत्नावली धारणा परिमे पशो भासद्गुणशालि महाधनिक नृप सचिव संभास मानोऽनेकोरू पण्यवीथी विभास मानान्तरा ॥१०॥

हस्त्यश्व रथ विशाल

शालागन्तुक ॥

निवास शाला

[illegible] ॥११॥

स्वस्ति स्वस्तिक सर्वतो भद्र नंद्यावर्त वैवर्तन विलास लास्यमान मान निपुण नर्तकी सत्सभा प्रकीर्तनीय कीर्ति सत्कीर्तन कलापानध्वनि गान गाम्भीर्य ज्ञाप्यमान मानदेश्वर प्रसारासार संवर्द्धमान प्रकार पारावार वारि सम्भार भावित विहार वापिका विराज राजि राजदम्भोज राजिका विनिर्गच्छत् स्वच्छ मकरन्द पान प्रमाण पदवी प्रवीण मानस मलिंद सानन्द फंकार कार्य मानकामुकी कलाप कैंकर्यविधूत धैर्य धौरेणधार्यमाण स्वछन्द प्रयाण पण्डित मण्डिताजिर बिच्छन्दकावली प्रभाप्रसाद संभासित सौभाग्य सम्पत्पद्मिनी षंड प्रवोद मादक बस्तु विनोद मोदमान मधुलिष्मरालमण्डली मदालस स्वन संभास्यमान मनोज सम्पत्ति संपर्कतर्वित वितर्क तार्किक कुशल प्रवाद प्रासाद संव्यूह व्यूहनीयाऽऽनीयमान महनीय महिला महत्वांतरित तरल तारुण्य तर्पित तनु स्व मनु जानु जायमानायत मानान्तः प्रवेशयत मान-मानव समूह संरोध बोधक विवेक वाक्कक्षा प्रकल्पित विलक्षण विशेषानुवाछुंठित स्वकंठागत गूढभाव वाणी विलास सैवास्तिकास्तिक शेमुखि भ्राज विभ्राजमान माणिक्य शिलासंघ संघितमिति भासितांतर सद्मसौध संभासिता ॥१२॥

श्रीमज्जगज्जन जेगीयमानगौरवा जम्बूनाम राजधानी धरित्र्यात्र्यलं कारावमानाया वर्तते ॥१३॥

तोमधुना मधुनादित नानासदामृगराज सेव्यमान सकल शरण चरण कमलो विमलोद्वृत्तवशीकृत कृतसदाचरण जगज्जन मनामुदिततर मनोवृत्ति सद्वृद्धि सदाचार सम्भाव्य मान मानस विलास श्रीमत्प्रतापसिंहामरसिंह प्रभृति पुत्रामात्य मित्रादि सम्बर्द्धमानानन्दः समन्त्रि संवृत्तः सच्छास्त्रोदित धर्म प्रवर्त प्रवर्तमानचेताः चारुचरितः शौर्य्याद्यखिल गुणगण गरिष्ठः श्रीमन्महाराजाधिराज श्रीरणवीरसिंह वर्माऽविद्यमानस्तेयामध्यास्ते ॥२४॥

श्रीमद्भूपतिवंशसद्गुण गणैतत्काव्य हेत्वादियुग्
दुर्गादत्तसुशर्मपानकवरोपुत्रस्य तीर्थे कुरोः ॥
सर्गः श्रीरणवीरसिंहविभुनाऽऽदिष्टस्य संवासिन -
श्चण्डीदासकवेः त्रयोदशमितःसर्गःसुपूर्णःकृतौ ॥१५॥

❀

श्रीमन्महाराजाधिराज- जम्बू-काश्मीराद्यनेकदेशाधीश
श्रीरणवीरसिंहवर्मादिष्ट- श्रीकुरुक्षेत्र-मध्यरेखाँतर्गत
पुण्डरीकपुरप्रसिद्ध - सवालवंशावतंस
श्रीदुर्गादत्तात्मजनव्यचण्डीदासकविकृतौ
"रघुनाथगुणोदये" महाकाव्ये
जम्बूराजधानीवर्णनपुरस्सरं श्रीमन्महाराजाधिराजगुलाबसिंहवंश
वर्णनो नामत्रयोदशः सर्गः ॥१३॥

इति
समाप्तं चेदं काव्यम्
शुभंश्रीदस्तूभयोः
॥ श्रीः ॥

---